पार्श्वे खेन गृहीत्वा गतो नागार्जुनः। 'सेढी'सञ्ज्ञनदीतटे श्रीपार्श्वदृष्टौ रसः स्तम्भितः। 'स्तम्भनकं' नाम तत् तीर्थं पप्रथे, 'स्तम्भनपुरं' नाम पुरं च।

अथ श्रीपादलिप्ताचार्याः 'प्रतिष्ठान'पुरं दक्षिणाशामुखभूषणं ५ 'गोदावरीं'नदीतरङ्गरङ्गज्जलकणहृतपान्थश्रमभरं जग्मुः। तत्र सातवाहनो राजा विदुषां योधानां दानशौण्डानां भोगिनां च प्रथमः। तस्य सभायां वार्ताऽभूत्, यथा— पादलिप्ताचार्याः सर्वविद्यावनितावदनरत्नदर्पणाः समागच्छन्तः सन्ति प्रातः। ततः सर्वैः पण्डितैः सम्भूय स्त्यानघृतभृतं कच्चोलकमर्पयित्वा निजः पुरुष एकः १० आचार्याणां सम्मुखं प्रस्थापितः। आचार्यैर्घृतमध्ये सूच्येका क्षिप्ता। तथैव च प्रतिप्रेषितं तत्। राज्ञा स वृत्तान्तो ज्ञातः। पण्डिताः पृष्टा— घृतपूर्णकच्चोलकप्रेषणेन वः को भावः?। तैरुक्तम्— एवमेतन्नगरं विदुषां पूर्णमास्ते यथा घृतस्य वर्तुलकम्, तस्माद् विमृश्य प्रवेष्टव्यम्, इति भावो नः। राज्ञा निगदितम्— तर्हि १५ आचार्यचेष्टाऽपि भवद्भिर्ज्ञायताम्, यथा–निरन्तरेऽपि घृते निजतीक्ष्णतया सूची प्रविष्टा तथाऽहमपि विद्वन्निविडे नगरे प्रवेक्ष्यामि इति। दृष्टास्तु पण्डिताः। सर्वे राजेन्द्रोऽपि सम्मुखं गताः सुरसरिल्लहरिहारिण्या वाण्या तुष्टुवुः। नगरमानीतो गुरुर्निर्वाणकलिकाप्रश्नप्रकाशादिशास्त्राणि सन्दर्भे। एकां च 'तरङ्गलोलां' नाम २० चम्पूं राजोऽग्रे नवां निर्माय सदसि व्याचख्ये प्रभुः। तुष्टो राजा। भगवत्यथ पथीद्रः।

शाणोत्तीर्णमिवोच्यक्षुति पद यन्धोऽर्द्धनारीश्वरः
श्मशानदहनजादिको त्रिपि स्तोत्रिकेव पौर्पाद् गतिः।

ईषच्चूर्णितचन्द्रमण्डलगलत्पीयूषतुल्यो रस-
स्तत् किञ्चित् कविकर्मनर्म न पुनर्वाग्डिण्डिमाडम्बरः॥१॥[1][2]

इत्येवं कवयोऽपि तुष्टुवुः । एका तु [3]वेश्या विदुषी राजसभ्या गुणज्ञाऽपि सूरीन्द्रान् न स्तौति । ततो राज्ञा भणितम्— वयं सर्वे तुष्टाः स्तुमः । केवलमियमेका न स्तौति । तद् क्रियतां येन स्तुते । ५
तदाकर्ण्य सूरयो वसतिमाययुः । रात्रौ गच्छसम्मत्या कपटमृत्युना मृताः, पवनजयसामर्थ्यात् । शवयानमाश्रितः सूरिः । चातुर्वर्ण्यं [4]रोदिति । वेश्यागृहद्वारे नीतं शवयानम् । वेश्याऽपि तत्रागता रुदती वदति—

[5]सीसं कहवि न फुट्टं, जम्मस्स पालित्तयं हरंतस्स ? । १०
जस्स मुहनिज्झराओ, तरङ्गलोलानई वूढा ॥ १ ॥[6]

पुनरजीवत् प्रभुः । वेश्ययाऽभाणि—मृत्वाऽऽत्माऽस्ताविः ? । सूरिराह—'मृत्वाऽपि पञ्चमो गेयः' इति किं न श्रुतम् ? ।

अथ प्रभुः 'शत्रुञ्जये' [7]दिनसङ्ख्योपवासानशनेन ईशानेन्द्रसामानिकत्वेनोदपद्यत । १५

इति श्रीपादलिप्ताचार्यप्रबन्धः ॥ ५ ॥

---

१ क-'कर्मनर्म०'। २ शार्दूल०। ३ क-'वैश्या'। ४ क-'रोदित.'।
५ छाया—शीर्षं कथमपि न भग्नं यमस्य पादलिप्तं हरतः ? ।
यस्य मुखनिर्झरात् तरङ्गलोलानदी व्यूढा ॥
६ आर्या। ७ द्वात्रिंशदुपवासा०। ८ ख-'पद्ये'।

[ ६ ]

## ॥ अथ श्रीवृद्धवादि-सिद्धसेनयोः प्रबन्धः ॥

'विद्याधरेन्द्र'गच्छे श्रीपादलिप्तसूरिसन्ताने स्कन्दिलाचार्याः साधितजैनकार्या पुस्फुरु । 'ते यतनया विहरन्तो 'गौड'देश ययु ।
५ तत्र 'कोशला'ह्वयग्रामवासी मुकुन्दो नाम विप्र । स तेषां सूरीणां मिलित । इत्य देशनामश्रौषीत् —

भोगे रोगभय सुखे क्षयभय वित्तेऽग्निभूभृद्भय
दास्ये स्वामिभय गुणे खलभय वशे कुयोपिद्भय ।
स्नेहे वैरभय नयेऽनयभय काये कृतान्ताद् भय
१०　सर्वं नाम भय भवे यदि पर वैराग्यमेवाभयम् ॥ १ ॥'

श्रुत्वा भवोद्विग्नश्चारित्र गृहीत्वा गुरुभि सम 'भृगु'पुर गत । स मुकुन्दमुनिस्तारस्वरेणाधीते रात्रौ । साधूनां निद्राभङ्गो भवति । ततस्तान् दुर्मनायमानान् ज्ञात्वा गुरुभिः पठन्निषिद्धोऽसौ । यथा— वत्स ! नमस्कारान् गुणय । रात्रावुच्चैर्भाषणे हिंस्रजीवजागरणादनर्थ-
१५ दण्डो मा भूदिति । ततो दिवा पठने श्रावकश्राविकादीनां कर्णज्वरो भवति । केनाप्युक्तम्——किमयमियद्वया पठित्वा मुशल पुष्पयिष्यति ' । तच्छ्रुत्वा मुकुन्दः खिन्न सद्यो महाविद्यार्थी एकविंश-त्योपवासैर्जिनालये ब्राह्मीमाराध । तुष्टाऽसौ प्रत्यक्षीभूय जगाद— सर्वविद्यासिद्धो भव । तत यथेन्द्रीभूय स्वगुर्वन्तिकमागत्य सङ्घ-
२० समक्षमक्षामस्वरेण जभाण— यन्ममोपहास केनापि कृतो यदय किं मुशल पुष्पयिष्यति, विलोकयत लोका ! मुशल पुष्पयामि । इत्युक्त्वा मुशलमानाय्य चतुष्पथे स्थित्वा तत् पुष्पयामास, मन्त्र-शक्तिमाहात्म्यात् । स्कन्धस्थितेन तेन भ्रमति पठति च—

---

१ ख–'तेन यत०' । २ शार्दू० । ३ क–'वचोभिः भूयः' ।

पंचमवलंबियं तह, जो जंपइ फुल्लए न मुसलमिह ।
तमहं निराकरित्ता, फुल्लइ मुसलं ति ठावेमि ॥ १ ॥[2]

तया—

[4]मद्रोः शृङ्गं शक्रयष्टिप्रमाणं
शीतो वह्निर्मारुतो निष्प्रकम्पः । ५
यस्मै यद् वा रोचते तन्न किञ्चिद्
वृद्धो वादी भाषते कः किमाह ॥१॥[5]

अप्रतिमल्लो वादी सोऽभूत् । स्कन्दिलाचार्यैः स्वपदे निवेशितः । वृद्धवादी इति ख्यातं तन्नाम । स्कन्दिलाचार्याः समाधिमृत्युरयेन धामगमन् । १०

एकदा वृद्धवादी 'भृगु'पुरं गच्छन्नास्ते । इतश्च'ऽवन्त्यां' विक्रमादित्यो राजा । यस्य दानानि—

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुला
पञ्चाशन्मदगन्धलुब्धमधुपक्रोधोद्धुराः सिन्धुराः ।
लावण्योपचयप्रपञ्चितदृशां पण्याङ्गनानां शतं १५
दण्डे 'पाण्ड्य'नृपेण ढौकितमिदं वैतालिकस्यार्प्यताम् ॥१॥[7]

इत्यादीनि ख्यातानि । तस्य राज्ये मान्यः 'कात्यायन'गोत्रावतंसो देवर्षिद्विजः । तत्पत्नी देवसिका । तयोः सिद्धसेनो नाम पुत्रः । स प्रज्ञाबलेन जगदपि तृणवद् गणयति । प्रज्ञायाश्च इयत्ता नास्ति । जगति ततः पठ्यते— २०

मिता भूः पत्याऽपां स च पतिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १ ॥[9]

येन वादे जीये तस्याहं शिष्यः स्याम् इति प्रतिज्ञा तस्य । २५

---

१ छाया— पञ्चमवलम्बित् तथा यो जल्पति पुष्पेषु न मुशलमिह ।
तमहं निराकृत्य पुष्पति मुशलमिति स्थापयामि ॥
२ ग–'ठावेमि' । ३ आर्या । ४ ख–घ–'मद्रोः शृङ्ग' । ५ शालिनी ।
६ क–ख–'स्थापितम्' । ७ शार्दूल० । ८ सूर्यः । ९ शिखरिणी ।

क्रमेण **वृद्धवादिन** कीर्तिं श्रुत्वा स तत्सम्मुख धावति स्म। सुखासनारूढो 'भृगु'पुर गत । तावद् 'भृगुकच्छा'न्निर्गतो **वृद्धवादी** मार्गे मिलित । परस्परमालापो जात । **सिद्धसेनो**
५ भाषते– वाद देहि । सूरिराह— दद्म , परमत्र के सभ्या ? सभ्यान् विना वादे जिताजिते को वदेत् ?। **सिद्धसेनेनोक्तम्**– एते गोपालका सभ्या भवन्तु । **वृद्धवादिना** भणितम्— तर्हि ब्रूहि । तत **सिद्धसेनस्तत्र** नगरगोचरे चिर संस्कृतेन जल्पम नल्पमकरोत् । क्रमेण च स्थित । गोपरुक्तम्— निमप्यय न
१० वेत्ति, केवलमुच्चै पूत्कार पूत्कार कर्णा न पीटयति । धिग् धिग् । वृद्ध ! त्व ब्रूहि किञ्चित् । ततो **वृद्धवादी** कालज्ञ, कच्छा दृढ बद्ध्वा [1]धिन्दिणिच्छ दसा नाचति—

> नवि मारियइ नवि चोरियइ परदारह गमणु निवारियइ ।
> [2]थोवाथोवमु दाविय सग्गि(ग्गि) ब्लु(झु)गुद्गुगु जाईयइ ॥१॥

१५ पुन पठति च—

> गुडसिउ चावइ तिलतादली वेडिइ वजावइ नासली ।
> पहिरणि ओढणि हुइ कामली इण परि ग्वालइ पूज(र)इ रुली ॥१॥

नृत्यति च—

> [3]कालउ कम्बलु अनुनी वांट्ठु छासिहिं खालडु भरिउ निपाठु ।
२० अइयडु पडित(प)उ नीलइ झा(झा)डि अवर कि सरगह सिंग निलाडि (?) ॥२॥

---

१ ग घ– धीदण० ।
२ क घ— नापि मारयत् नापि चोरयत् परदारस्य गमन निवारयत् । स्तोकस्तोक दापयत् स्वर्गं झगिति गच्छत् ।
३ क थोवाथोव दाइयइ स ग्ग टुगुटुकु जाइयइ, घ थोवाथोवउ दाग्इ सग्गि टुगुटुगु जाइयइ ।
४ छाया— गुडेन खादति तिलतन्दुलान् वशनिर्वादयति वंशम् । परिधाने आच्छादन भवति कम्बलो एव गोपा पूजयति रुचम् ।
५ छाया—कृष्ण कम्बलो स्तुत्यं गन्नक दध्ना निपूनम् । अत्रापि पतित नीलवृक्ष तले किं स्वर्गस्य शृङ्ग ललाटे ? ॥
६ घ-शा च ह । ७ घ—इद पद्य क ख ग—प्रतौ इयत ।

गोपा दृष्ट्वा प्रोचु —**वृद्धवादी** सर्वज्ञ, अहो कीदृक् श्रुति-सुखमुपयोगि पठति। **सिद्धसेनस्तु** असारपाठक इत्यनिन्दन्। तत **सिद्धसेनः** प्राह—भगवन्[1] मा प्रव्राजय। तव शिष्योऽहं, वादे सम्यसम्मत जितत्वात्। अथ वृद्धवाद्याह— 'भृगु'पुरे राजसभायामावयोर्वादोऽस्तु। गोपसभाया को वाद ? । **सिद्धसेने** ५ नोक्तम्—अहमकालज्ञ, त्व तु कालज्ञ, य कालज्ञ स सर्वज्ञ। त्वयैव जितम्। इत्येव वदन्त त तत्रैव दीक्षयामास।

तत्र प्रभृति 'भृगु'पुरनरेन्द्रेण त वृत्तान्त ज्ञात्वा 'ताल्लारसो' नाम ग्राम स्थापित प्रौढ। **नाभेयचैत्य** कारितम्। **नाभेयबिम्ब** **वृद्धवादिना** प्रतिष्ठितम्। सङ्घो जगर्ज। **सिद्धसेनस्य** दीक्षाकाले १० **कुमुदचन्द्र** इति नामासीत्। सूरिपदे पुन **सिद्धसेनदिवाकर** इति नाम पप्रथे। तदा 'दिवाकर' इति सूरे सञ्ज्ञा, स्वामिशब्दवद् वाचकशब्दवच्च। **वृद्धवादी** अन्यत्र विहरति। **सिद्धसेनस्तु**'अवन्ती' ययौ। सङ्घ सम्मुखमागत्य त सूरिं 'सर्वज्ञपुत्रक' इति बिरुदे पठ्यमाने'ऽवन्ती'चतुष्पथ नयति। तदा राजा **विक्रमादित्यो** हस्ति- १५ स्कन्धारूढ सम्मुखमागच्छन्नस्ति। राज्ञा श्रुतम्—सर्वज्ञपुत्रक इति। तत्परीक्षार्थं हस्तिस्थ एव मनसा सूरेर्नमस्कार चकार, न वाक्शिरोभ्याम्। सूरिश्चासन्नायातो धर्मलाभ बभाण। राजेन्द्रेण भणितम्—अवन्दमानेभ्योऽस्मभ्य को धर्मलाभ ?। किमय सवर्वो लभ्यमानोऽस्ति[2]। सूरिणा श्रुत्वाऽभाणि—चिन्तामणिकोटितोऽप्यधिको- २० ऽय वन्दमानाय देय, न च त्वया न वन्दिता वयम्, मनस सर्वप्रधानत्वात्, अस्मत्सार्वज्ञपरीक्षायै हि मनसाऽस्मानवन्दया। ततस्तुष्टो राजेश्वरो हस्तिस्कन्धादवरुह्य सङ्घसमक्ष ददे कनककोटिं चानाययत्। आचार्ये सा न जगृहे, निर्लोभत्वात्। राज्ञाऽपि न जगृहे, कल्पितत्वात्। तत आचार्यानुज्ञया सङ्घपुरुषैर्जीर्णोद्धारे २५ व्ययिता। राजवहिकाया चेव लिखितम्—

१ ख मुपयोग। २ ग 'ऽस्माक। ३ ख-घ-'सू रिस्तमभ्य(?)भाणि'।

धर्मलाभ इति प्रोक्ते, दूरादुच्छ्रितपाणये ।
सूरये सिद्धसेनाय, ददौ कोटिं धराधिप ॥ १ ॥[1]

श्रीविक्रमाग्रे अवसरे तेनैव भगवता भणितम्—

[2]पुन्ने वाससहस्से सयमि वरिसाण नवनवइकलिए ।
५ होही कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥ १ ॥[3]

अन्यदा सिद्धसेन[4]श्चित्रकूटमटति स्म। तत्र चिरन्तनचैत्ये स्तम्भमेकं महान्तं दृष्ट्वा कश्चिदप्राक्षीत्—कोऽयं स्तम्भो महान् ? किंमय ? । तेनोक्तम्—पूर्वाचार्यैरिह रहस्यविद्यापुस्तकानि न्यस्तानि सन्ति । स्तम्भस्तु तत्तदौषधद्रव्यमय । जलादिभिरभेद्यो
१० वज्रवत् । तद्वचनं श्रुत्वा सिद्धसेनस्तस्य स्तम्भस्य गन्धं गृहीत्वा प्रत्यौषधरसैस्तमाच्छोटयामास । तैः स प्रातरम्बुजवद् विचकास । मध्यात् पतिता पुस्तका । तत्रैकं पुस्तकं छोटयित्वा वाचयन्नाद्यपत्र एव द्वे विद्ये लभते स्म । एका सर्षपविद्या, अपरा हेमविद्या । तत्र सर्षपविद्या सा यथोत्पन्ने कार्ये मान्त्रिको यावन्त सर्षपान्
१५ जलाशये क्षिपति तावन्तोऽश्ववारा [5]द्विचत्वारिंशदुपकरणसहिता निस्सरन्ति । तत परबलं भज्यते । सुभटा कार्यसिद्धेरनन्तरमदर्शीभवन्ति । [7]हेमविद्या पुनरक्लेशेन शुद्धहेमकोटीं सद्यो निष्पादयति येन तेन धातुना । तद् विद्याद्वयं सम्यग् जग्राह । यावदग्रे वाचयति तावत् स्तम्भो मिलित पुस्तकगर्भ । खे च वागुत्पन्ना—अयोग्यो-
२० ऽसि ईदृशानां रहस्यानां, मा चपल कृथा , सद्यो मा म्रियस्व, इति । ततो भीत स्थित. । यद् विद्याद्वयं लब्धं तच्छन्धम्, ना-

---

१ अनुष्टुप् ।
२ छाया— पूर्णे वर्षसहस्रे शते वर्षाणां नवनवतिकलिते ।
भविष्यति कुमारनरेन्द्रस्तव विक्रमराज ! सदृश ॥
३ आर्या । ४ 'कोडीने' इति भाषायाम् । ५ एतन्नामानि न ज्ञायन्ते । ६ घ - 'भवन्ते' ७ क—'अपरा हेमविद्या' । ८ घ -'कोटी' ।

पदार्थे । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्यः 'पूर्व'[1]गतश्रुतानि लेभे । वृद्धवादी दिवं गतः ।

एकदा सिद्धसेनः सङ्घं मेलयित्वाऽऽह स्म—सकलान्यप्यागमानहं संस्कृतान्[2] करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म— किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा यदर्धमागधेनागमानकृषत ? । तदेवं जल्पतस्तव महत् प्रायश्चित्तमापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि[3] । ततो विमृश्याभिदधेऽसौ—सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं 'पाराञ्चिकं' नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीम'दुज्जयिन्यां' महाकालप्रासादे 'शेफालिका'[4]कुसुमरञ्जिताम्बराच्छन्नशरीरः समागत्यास चक्रे । ततो देवं कथं न नमस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेवः समागत्य अभ्यवाञ्चकार— भारतिर्भिक्षो ! भिक्षो[5] ! किमिति त्वया देवो न वन्द्यते ? । ततस्तु राजानं प्रत्यवादि वादिना— मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोक्तं— भवतु, क्रियतां नमस्कारः । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि—

"स्वयम्भुवं भूतसहस्रनेत्र-मनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक-मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"

इत्यादि 'श्रीवीरद्वात्रिंशद्द्वात्रिंशिका' कृता । परं तस्मात्

१ जैनानां द्वादशाङ्गस्य एको विभागः सम्प्रतमीव । २ 'मेलयित्वा' इति भ पाठान्तर् । ३ ग घ 'संस्कृतान्' । ४ ख 'जानन्नेव' । ५ ग-'जनजीति' । ६ क-ख घ 'दत-हिरदनवादि' । ७ उपक्रान्ति । ८ ग-प्रतौ 'श्रीवीर०' 'इत्यारभ्य' 'स्तुत चक्रे' पुनरपि इत्यपि ।

पदार्थः । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्यः 'पूर्व'गतश्रुतानि लेभे । वृद्धवादी दिवं गतः ।

एकदा सिद्धसेनः सङ्घं [2]मेलयित्वाऽऽह स्म—सकलानप्यागमानहं [3]संस्कृतमयान् करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म— ५
किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा यदर्धमागधेनागमानकृषत ? । तदेवं जल्पतस्तव महत् प्रायश्चित्तमापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ—सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं 'पाराञ्चिकं' नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः १०
प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीमदुज्जयिन्यां महाकालप्रासादे 'शेफालिका'कुसुमरञ्जिताम्बरालङ्कृतशरीरः समागत्यासाञ्चक्रे । ततो देवं कथं न [5]नमस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेवः १५
समागत्य जल्पयाञ्चकार— क्षीरलिलिक्षो ! भिक्षो ! किमिति त्वया देवो न वन्द्यते ? । [6]ततस्तु राजानं प्रतीदमवादि वादिना— मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे— भवतु, क्रियतां नमस्कारः । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि— २०

"स्वयम्भुवं भूतसहस्रनेत्र—मनेकमेकाक्षरभावलिङ्गम् ।

अव्यक्तमव्याहतविश्वलोक—मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥[7]"

इत्यादि [8]श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । परं तस्मात्

१ जैनानां द्वादशाङ्गस्य एको विभागः संस्कृतप्रायः । २ 'मेळवीनें' इति भाषायाम् । ३ ग घ-'संस्कृतान्' । ४ ग-'मागधेना' । ५ ग-'नमसीति' । ६ क-ख-घ-'ततस्तदमवादि' । ७ उपजातिः । ८ ग-प्रतौ ' श्रीवीर० 'इत्यारभ्य ' स्तवं चक्रे ' एतत्पर्यन्तमधिकम् ।

पदार्थः । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छय वृद्धवादिना सह निविडचारित्रधरो विजहार । अपरापरगुरुभ्यः 'पूर्व'गतश्रुतानि लेभे । वृद्धवादी दिवं गतः ।

एकदा सिद्धसेनः सङ्घं [1]मेळयित्वाऽऽह स्म—सकलानप्यागमानहं [2]संस्कृतमयान् करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म— ५ किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा यदर्धमागधेनागमानकृषत ? । तदेवं जल्पतस्तव महत् प्रायश्चित्तमापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ—सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं 'पाराञ्चिकं' नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः १० प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीम'दुज्जयिन्यां' महाकालप्रासादे 'शेफालिका'कुसुमरञ्जिताम्बराळङ्कृतशरीरः समागत्यासाञ्चक्रे । ततो देवं कथं न नमस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेवः १५ समागत्य जल्पयाञ्चकार— क्षीरलिलिक्षो ! भिक्षो ! किमिति त्वया देवो न वन्द्यते ? । ततस्तु राजानं प्रतीदमवादि वादिना— मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे— भवतु, क्रियतां नमस्कारः । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि— २०

"स्वयम्भुवं भूतसहस्रनेत्र-मनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक-मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"[7]

इत्यादि [8]श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । परं तस्मात्

---

१ जैनानां द्वादशाङ्गान्त एको विभागः सरस्वत्याः । २ 'मेळवीने' इति भाषायाम् । ३ ग घ-'संस्कृतान्' । ४ ख-'मागधेना' । ५ ग-'नमसीति' । ६ क-ख-घ-'ततस्तिदमवादि' । ७ उपजातिः । ८ ग-प्रतौ 'श्रीवीर०' 'इत्यारभ्य' 'स्तवं चक्रे' एतत्पर्यन्तमधिकम् ।

पदार्थं । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य
वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्य
'पूर्व'गतश्रुतानि लेभे । वृद्धवादी च्या गत ।

एकदा सिद्धसेनः सङ्घं मेलयित्वाऽऽह स्म–सकलानप्यागमानह
संस्कृतमयान् करोमि, यदि आदिशथ । तत सङ्घो वदति स्म– ५
किं संस्कृत कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा
यदर्धमागधेनागमानकृपत ? । तदेव जल्पतस्तव महत् प्रायश्चित्त-
मापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि । ततो
निभृश्याभिदधेऽसौ–सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिक
'पाराञ्चिक' नाम प्रायश्चित्त गुप्तमुखवस्त्रिकारजोहरणादिलिङ्ग १०
प्रकटितावधूतरूपश्चरिष्याम्युपयुक्त । एवमुक्त्वा गच्छ मुक्त्वा
ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीम'दुज्जयिन्या' महाकाल-
प्रासादे 'शेफालिका'कुसुमरञ्जिताम्बरालङ्कृतशरीर समागत्या-
सञ्चक्रे । ततो देव कथ न नमस्यसीति लोकैर्जल्प्यमानोऽपि
नाजल्पत् । एव च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेव १५
समागत्य जल्पयाञ्चकार— क्षीरलिलिक्षो ! भिक्षो [1] किमिति
त्वया देवो न वन्द्यते ? । ततस्तु राजान प्रतीदमवादि वादिना—
मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे—
भवतु, क्रियतां नमस्कार । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन
भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देव स्तोतुमुपचक्रमे । तथाहि— २०

"स्वयम्भुव भूतसहस्रनेत्र–मनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक–मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"

इत्यादि श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । पर तस्माद्

---

१ जैनानां द्वादशाङ्गस्य एको विभाग संस्कृतग्रीय । २ 'मेळवीने' इति भाषायाम् ।
३ ग घ 'संस्कृतान् । ४ ख 'मागधेना' । ५ ग 'नमसीति । ६ क ख घ 'तत
रिवदमवादि ' । ७ उपजाति । ८ ग–प्रतौ ' श्रीवीर॰ इत्यारभ्य ' स्तव चक्रे '
एतत्पर्यन्तमधिकम् ।

इति गाथा समाचर्यते । तदपयश श्रुत्वा **वृद्धवादी** कृपया त
निस्तारयितुमेकाकीभूय गच्छ वृषभेषु न्यस्य तत्रागत । द्वारे स्थित
सूरीणामग्रे कथापयति द्वा स्थै , यथा—वादी एको व्याख्यानाया-
तोऽस्ति । मध्ये सूरिभिराहूत पुर उपवेशित । वस्त्रावगुण्ठितसर्व-
५ कायो **वृद्धवादी** वदति— व्याख्याहि—

अणपुंल्लियपुल्ल म तोडहिं मा रोया मोडहिं ।

मणकुसुमेहिं अच्चि निरजणु हिंडइ काइ वणेण वणु ? ॥ १ ॥

**सिद्धसेन**श्चिन्तयन्नपि न वेत्त्यर्थम् । ततो ध्यायति—किमेते गे
गुरवो **वृद्धवादि**नो येषा भणितमहमपि व्याख्यातु न शक्नोमि ? ।
१० पुन पुन पश्यता उपलक्षिता गुरव । पादयो प्रणम्य क्षामिता
यथार्थं पृष्टा । तेऽथ व्याचक्षिरे, यथा— 'अणपुंल्लियपुल्ल०'
प्राकृतस्यानन्त्यात् अप्राप्तफलानि पुष्पाणि मा त्रोटय । को
भाव ? । योग कल्पद्रुम । कथम् ? यस्मिन् मूल यमनियमा ,
ध्यान प्रकाण्डप्राय, स्कन्धश्री समता, कवित्वनक्तृत्वयश प्रताप-
१५ मारणस्तम्भनोच्चाटनवशीकरणादिसामर्थ्यानि पुष्पाणि, केवलज्ञान
फलम् । अद्यापि योगकल्पद्रुमस्य पुष्पाण्युद्गतानि सन्ति, तत् केवल-
फलेन तु पुर फलिष्यन्ति । तान्यप्राप्तफलान्येव किमिति त्रोट-
यसि ? । मा त्रोटय इति भाव । 'मा रोया मोडहि' इह रोपा
पञ्च महाव्रतानि, तानि मा मोटय । 'मणकुसुमेहिं' मन कुसुमै-
२० निरञ्जन-जिन पूजय । 'हिंडइ वणेण वणु' वनाद् वन किं
हिण्डसे ? । राजसेवादीनि कुष्ठाणि निरसफलानि कथ करोषीति

१ घ 'क्षपया । २ ग–'तत्र गत' ।

३ छाया–अप्राप्तफलानि पुष्पाणि मा त्रोटय मा रोपान् मोटय ।
मन कुसुमैरर्चय निरञ्जन हिण्डसे किम् वनाद् वनम् ? ॥

४ ग-घ 'हुलिय०' । ५ घ ग ग–'हिंडइ वणण' । ६ ग ग 'पदयो' ।
७ घ ग घ क्षमिता । ८ ग-घ–'हुलिय०' । ९ क 'प्रागरप ध. श्री'
१० ग '[illegible]' ।

पदार्थः । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्यः 'पूर्व'गतश्रुतानि लेभे । वृद्धवादी द्यां गतः ।

एकदा सिद्धसेनः सङ्घं [1]मेलयित्वाऽऽह स्म—सकलानप्यागमानहं [2]संस्कृतमयान् करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म— ५
किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा यदर्धमागधेनागमानकृषत ? । तदेवं जल्पतस्तव महत् प्रायश्चित्त-मापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ—सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं 'पाराञ्चिकं' नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः १०
प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीम'दुज्जयिन्यां' महाकाल-प्रासादे 'शेफालिका'कुसुमरञ्जिताम्बरालङ्कृतशरीरः समागत्या-साञ्चक्रे । ततो देवं कथं न नमस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेवः १५
समागत्य जल्पयाञ्चकार— क्षीरलिलिक्षो ! भिक्षो ! किमिति त्वया देवो न वन्द्यते ? । ततस्तु राजानं प्रतीदमवादि वादिना— मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे— भवतु, क्रियतां नमस्कारः । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि— २०

"स्वयम्भुवं भूतसहस्रनेत्र-मनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक-मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"

इत्यादि [8]श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । परं तस्माद्

---

1 जैनानां द्वादशाङ्गस्य एको विभागः संस्कृतग्रन्थः । २ 'मेळवीने' इति भाषायाम् । ३ ग घ-'संस्कृतान्' । ४ ख-'मागधेना' । ५ ग-'नमसीति' । ६ क-ख-घ-'तत-स्त्विदमवादि' । ७ उपजातिः । ८ ग-प्रतौ 'श्रीवीर०' इत्यारभ्य 'स्तवं चक्रे' एतत्पर्यन्तमधिकम् ।

तादृक्(श) चमत्कारमनालोक्य पश्चात् श्रीपार्श्वनाथद्वात्रिंशिकामभिकर्तुं कल्याणमन्दिरस्तव[व चक्रे] प्रथम एव श्लोके पासादस्थिताद् शिखिशिखाग्रादिव लिङ्गाद् धूमवर्तिरुदतिष्ठत्। ततो जनैर्वचनमिदमूचे—अष्टविंशेशाधीश कालाग्निरुद्रोऽप भगवांस्तृतीयनेत्रानलेन भिक्षु भस्मसात्करिष्यति। ततस्तडित्तेज इव सर्तडात्कार प्रथम ज्योतिर्निर्गतम्। तत श्रीपार्श्वनाथबिम्ब प्रकटीबभूव। तद् वादिना विविधस्तुतिभि स्तुत क्षमित च। राजा विक्रमादित्यः पृच्छति—भगवन्! किमिदमदृष्टपूर्वं दृश्यते? कोऽय नवीनो देव प्रादुरभूत्? अथ सिद्धसेन प्रोवाच—राजन्! पूर्वमस्यामेवा'ऽयन्त्या' श्रेष्ठिनीभद्रासूनुर्द्वात्रिंश पत्नीयौवनपरिमलसर्वस्वग्राही अवन्तीसुकुमाल इति ख्यात श्रेष्ठ्यासीत्। स शालिभद्र इव कमपि गृहव्यापार नाकार्षीत्, किन्तु मातैव सर्वामपि गृहतप्तिमकृत। एकदा दशपूर्वधर आर्यसुहस्त्याख्यो 'मौर्य'वशमुकुटसम्प्रतिनृपगुरु सगच्छो विहर'न्नव न्ती'माग य भद्राऽनुमत्या गृहैकदेशेऽस्थात्। रात्रौ ते 'नलिनीगुल्म'ख्यस्य स्वर्विमानस्य विचार गुणयन्ति। तपोधनजने विश्रान्ते सति त विचार शृण्वन्[2] सा द्रच द्रातपायां निशि स्वैर पद्भ्या भ्रमन्नवन्तीसुकुमालस्तत्रायात सम्यगश्रौषीत्। आगत्य गुरून् जगौ—भगवन्! किमेतद् गुण्यते? आर्यैरुक्तम्—वत्स! 'नलिनीगुल्म'विमानविचार। अवन्तीसुकुमालः प्राह स्म—ईदृशमेवेद प्रेत्य मयाऽनुभूतम्। इद केनोपायेन लभ्यते? आर्यैर्भणितम्—चारित्रेण। अवन्तीसुकुमालोऽप्याविभाताद् गृहीत'नलिनीगुल्म'विमानग्रहण प्रतिज्ञ स्वय कृतलोच पश्चाद् गुरुभिरपि दत्तसामायिक 'क थार कुडङ्गा'ख्य श्मशानमेत्य कायोत्सर्गी भवान्तरभार्यया शृगालीत्व

१ घ- हुंकार'। २ ग प्रतौ 'शृण्वन्' इत्यधिक पाठः। ३ ग- नलिनीगुल्मविमान॰। ४ ग- प्याविभातात्। ५ ख- कुडुङ्ग॰'।

मापजया 'सारमेया क्षुधितया दर्भसूचीविधक्षरत्तद्रुधिरधारागन्धलुब्धा-
गतया भक्षित सद्भावनाजर्जरितपापकर्मा 'नलिनीगुल्म'माप। प्रात
स्तन्माता सस्नुषा गुरुमुखादवगतपुत्रवृत्तान्ता तच्छ्मशानमागत्य
विलप्य विविध विविधम्। पुनर्गृहमागता। एका सगर्भा वधू गृहे
मुक्त्वा एकत्रिंशता वधूभि सह सयममादाय दिव लेभे। सगर्भास्थित ५
वधूकाजातपुत्रेण 'स्फीतयौवननाय प्रासाद॰ कारित । मम पितु
र्महाकालोऽत्राभूदिति 'महाकाल'नाम दत्तम्। श्रीपार्श्वबिम्ब मध्ये
स्थापितम्। कत्यप्यहानि 'लोके पूजितम्। अवसरे द्विजैस्तदन्त
रित कृत्वा मृडलिङ्गमिद स्थापितम्। अधुना मत्कृतस्तुतितुष्ट
श्रीपार्श्वनाथ प्रादुरासीत्। मत्प्रेरितशासनदेवताबलात् तु मृड १०
लिङ्ग विदध्रे। सत्यासत्ययोरन्तर पश्य। तच्छ्रवणान्नृप शासने
ग्रामशतान्यदत्त देवाय। उपगुरु सम्यक्त्वा द्वादश(?)व्रतामुपादत्त।
अस्तावत वादीन्द्रम्—

अहयो बहव सन्ति, भेकभक्षणदक्षिणा ।
एक एव 'स शेषो हि, धरित्रीधरणक्षम ॥ १ ॥ १५

तथा त्वम्। अहो कवित्वशक्तिस्ते[1]।

पद सपदि कस्य न स्फुरति शर्करापाकिम[8]
रसालरससेकिम भणितिनैमव कस्य न[2]।
तदेतदुभय किमप्यमृतनिर्झरोद्गारिभै
स्तरङ्गयति यो रसै स पुनरेक एव क्वचित् ॥ १ ॥[9] २०

न नाम्ना 'नो वृत्त्या परिचयवशाच्छन्दसि न वा
न शब्दव्युत्पत्त्या निभृतमुपदेशान्न च गुरो ।
अपि त्वेता स्वैर जगति सुकवीना मधुमुचो
विपच्यन्ते वाच सुकृतपरिणामेन महता ॥ २ ॥[11]

---

१ वत्ससहितया। २ क 'स्फीतिवधूजयौ॰ । ३ ग—श्रीपार्श्वनाथबिम्ब ।
४ क—लोकन'। ५ शिव॰। ६ ग 'ततस'। ७ ग—'श्रीशेषो हि धरणीधरण॰
८ अष्टुप्। ९ पृथ्वी। १० ख—घ—या वृत्त्या'। ११ शिखरिणी।

इति स्तुत्वा स सम्राट् स्वस्थानमयासीत् । वादीन्द्रोऽपि प्रभावना तुष्टेन सङ्घेन मध्ये कृत ।

अन्येद्यु सिद्धसेनो विहर'न्नोङ्कारा'ख्य 'माळवे'षु नगर ययौ। तत्र भक्तै श्रावकैर्विज्ञप्त सूरये, यथा—भगवन्! अस्यैव नगर-
५ स्यासन्नो ग्राम एक आसीत् । तत्र सुन्दरो नाम राजपुत्रो ग्रामणी ।
तस्य द्वे पत्न्यौ । एका प्रथमं पुत्रीं प्रासूत, अखिद्यत च । तदेव सपत्न्यप्यासन्नप्रसवा वर्तते । मा स्मैष पुत्र प्रसूय भर्तु सविशेष वल्लभा भूदिति स्त्रीत्वोचितया तुच्छया बुद्ध्या सूतिकामेकामशेचत—यदा इय मे सपत्नी प्रसवकाले त्वा दैववशादाह्वयति तदा त्वया
१० परस्थानात् प्रथम सद्गृहीत मृत किञ्चिदपत्य तत्र सञ्चार्यम् । तज्जातक चेत् पुत्रो भवति तदा स्वय गृह्य वा ग्रामाद् दूरे व्युत्सष्ट-व्यम् । इद हेम गृहाण । इति सूत्रणा चक्रुषी । नियतिवशात् तत्र तत् तया तथैव कृतम् । राजपुत्रो जातमात्रो ग्रामाद् दूरे क्षिप्तो ही ।
स राजपुत्रोऽपि पुण्याधिक इति त कुलदेवतया धेनुरूपेण दुग्ध
१५ दत्त्वा पालयन्त्याऽष्टवर्षदेशाय कृत । अथात्रैव 'ॐकार'नगरे शिव भवनाधिकारिणा भरटकेन दृष्ट, आलापित, स्वा दीक्षा ग्राहित ।

अन्यदा 'क(न्या) यकुब्ज'देशाधिपतिर्नरेन्द्रो जात्यन्धो दिग्वि जयकार्मेण प्रत्यासन्न समावासित । रात्रौ लघुभरटकस्य शिवादेश सञ्जात —त्वया 'क(न्या)यकुब्जे'शाय शेषा देया । तयाऽसौ सज्जा-
२० क्षो भावी। तद् वाक्य लघुवृद्धद्गुरवे समाख्याय तदाज्ञया शेषामादाय स्कन्धावारमध्यमेत्य राजामात्यानुवाच— भो भो स्वनाथमस्मत्सम् मुखमानयध्व यथा सद्य कमलदलललित स्वविषयग्रहणक्षमाक्ष कुर्महे । ततोऽमात्यनुन्नो राजा तत्रायात । ऋषिदत्ता शेषामादायाक्ष्णो-र्निवेश्य सज्जाक्षो जात । प्रीतो भक्त्या ग्रामशतानि शासनेऽदात् ।
२५ अत्रैव च 'ॐकारे' इममुत्तुङ्ग प्रासादमचीकरत् । वयमिह पुरे वसाम । जैन. प्रासाद कारयितु न लभ्यते । मिथ्यादृशो बलिन । तस्मात्

१ ग-- राजपुत्रग्रामणी ' ।

तत् कुरु येन इतोऽधिक तुङ्ग रम्य चैत्य निष्पद्यते । बली त्वमेवेति । तद्वचन श्रुत्वा वादी 'अवन्ती'मागत्य चतुःश्लोकीं हस्ते कृत्वा विक्रमादित्यद्वारमेत्य द्वास्थेनोपराज श्लोकमचीकथत् । स तेन कथित , यथा—

दिदृक्षुर्भिक्षुरायातो, द्वारि तिष्ठति वारित । ५
हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ? ॥ १ ॥[3]

त श्लोक श्रुत्वा विक्रमादित्येन प्रतिश्लोक कथापित , यथा—

दत्तानि दश लक्षाणि, शासनानि चतुर्दश ।
हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ॥ २ ॥

वादिना त श्लोक श्रुत्वा द्वास्थद्वारेण भाणित राज्ञे— दर्शनमेव १० भिक्षुरीहते, नार्थम् । ततो राज्ञा स्वदृष्टौ आहूत । उपलक्षितो भाषितश्च—भगवन् ! किमिति चिराद् दृश्यध्वे ? । आचार्यैरुक्तम्— धर्मकार्यवशाच्चिरादायात । श्लोकचतुष्टय शृणु । राज्ञि शृण्वति पठित तद्, यथा—

अपूर्वेय धनुर्विद्या, भवता शिक्षिता कुत ? । १५
मार्गणौघः समभ्येति, गुणो याति दिगन्तरम् ॥ १ ॥[4]
[5]सरस्वती स्थिता वक्त्रे, लक्ष्मी करसरोरुहे ।
कीर्ति किं कुपिता राजन् !, येन देशान्तर गता ? ॥२॥[6]
कीर्तिस्ते जातजाड्येव, चतुरम्भोधिमज्जनात् ।
आतपाय धरानाथ !, गता मार्तण्डमण्डलम् ॥ ३ ॥[7] २०
सर्वदा सर्वदोऽसीति, मिथ्या सस्तूयसे जनै ।
नारयो लेभिरे पृष्ठ, न वक्ष परयोषित ॥ ४ ॥[8]

श्रुत्वा तुष्टो विक्रमश्चतुरो गजान् यथासङ्ख्य वसन-सुगन्धद्रव्य-हेम-नाणक-हारादिपूर्णान् आनाय्य सूरिमभाणीत्—इमे गृह्यन्ताम् ।

---

१ ग– द्वास्थनापचार' । २ क ख ग मातस्तिष्ठति द्वारि वारित । ३ अनुष्टुप् । ४ ख–घ 'राज्ञा दर्शन०' । ५ ६ अनुष्टुप् । ७ ८ अनुष्टुप् ।

सूरिरूचे—नैतदप्यर्हम् । पुनर्विक्रमो भणति—मन्महीसारभूतां-
श्चतुरो देशान् स्वैरमादत्स्व । वाद्याह—इदमपि नेच्छामि । तर्हि
किमिच्छसीति ? । राजन् ! श्रूयताम्—'ॐकारे' चतुर्द्वारं जैनप्रासाद
शिवप्रासादादुच्चं कारय, स्वय सपरिच्छदः प्रतिष्ठा च तत्र कारयेति ।
५ राज्ञा तत् तथैव कृतम् । प्रभावनया सङ्घस्तुष्टः । एव जैन धर्मं
द्योतयन् वादी दक्षिणस्यां 'पृथ्वीस्थान'पुर विहरन् गतः । तत्रायु-
रन्त ज्ञात्वाऽनशन लात्वा स्वर्गलोकमध्यवात्सीत् । तत्रस्थसङ्घेन
'चित्रकूटे' सिद्धसेनगच्छ त वृत्तान्त ज्ञापयितु वाग्मी भट्ट एकः
प्रस्थापितः । स तत्सूरिसभायां श्लोकपूर्वार्द्धं पुनः पुनः पठति स्म—
१० स्फुरन्ति वादिखद्योताः, साम्प्रतं दक्षिणापथे ।
पुनः पुनः पाठे 'सिद्धसारस्वत'या सिद्धसेनभगिन्योक्तम्—
नूनमस्त गतो वादी, सिद्धसेनो दिवाकरः ॥ १ ॥[2]
पश्चाद् भट्टेन प्रपञ्च्योक्तम् । ततः शोको विहितो विसृष्टश्च ।

इति वृद्धवादिसिद्धसेनयोः प्रबन्धः ॥ ६ ॥



१ D-'दूरे गच्छत स सिद्धसेनसूरि मां'। २ अनुष्टुप्। ३ P- D -'प्रबन्धः'।

## [ ७ ]

### ॥ अथ श्रीमल्लवादिप्रबन्धः ॥

श्रीइन्द्रभूतिमानम्य, प्रभवक्तृशिरोमणे. ।
श्रीमल्लवादिसूरीन्दो--श्चरितं कीर्त्यते मया ॥ १ ॥[1]
'खेटा'भिधं महास्थान--मस्ति 'गूर्जर'मण्डले ।　　५
देवादित्याह्वयस्तत्र, विप्रोऽभूद् वेदपारग. ॥ २ ॥
सुभगाख्या सुता तस्य, विधवा बालकालतः ।
कस्मादपि गुरोर्मन्त्रं, 'सौरं' सा प्राप भक्तिभाक् ॥ ३ ॥
आकृष्टस्तेन मन्त्रेण, भास्करस्तामुपागमत् ।
तद्भोगलाभादापन्न--सत्त्वा सा न चिरादभूत् ॥ ४ ॥　　१०
वैक्रियेभ्य सुराङ्गेभ्यो, गर्भो यद्यपि नोद्भवेद् ।
[4]तदानीं त्वौदारिकाङ्ग--धातुयोगात् तु सम्भवी ॥ ५ ॥
आपाण्डुगण्डफलका, ग्लानाङ्गीं वीक्ष्य तां पिता ।
बभाषे किमिदं वत्से !, निन्द्यमाचरितं त्वया [3] ॥ ६ ॥
सा प्राह स्म पितर्नैव, प्रमादविकृतिर्मम ।　　१५
मन्त्राकृष्टागतोष्णांशु--न्यास पुनरयं बलात् ॥ ७ ॥
इत्युक्तोऽपि विषण्णात्मा, देवादित्यः कुकर्मणा ।
तां पुत्रीं प्रेषयामास, सभृत्यां 'वलभीं' पुरीम् ॥ ८ ॥
कालेन तत्र साऽसूत, पुत्रं पुत्रीं च सुद्युतम् ।
तत्रैवोवास सुचिरं, जनकार्पितजीविका ॥ ९ ॥　　२०
क्रमेण ववृधाते तौ, पुत्रौ बालार्कतेजसौ ।
यावदष्टौ व्यतिक्रान्ता, वत्सरा क्षणवत् तयो ॥ १० ॥
तावदध्यापकस्यान्ते, पठितुं तौ निवेशितौ ।
कलहेऽर्भै निष्पितृक--मूचिरे लेखशालिका ॥ ११ ॥--युग्मम्

---

१ अत. परं ६९ तम पद्यं यावत् छन्दोऽनुष्टुप्' । २ ख- घ--'स्थानं, अस्ति' ।
३ सूर्यसम्बन्धि । ४ ख घ 'तदानीतौ(?)दा०' ।

तद्गिरा खिद्यमानोऽर्भः, पप्रच्छ जननीं निजाम् ।
किं मातर्नास्ति मे तातो, येन लोकोक्तिरीदृशी[1] ॥ १२ ॥
माता जगाद नो वेद्मि, किं पीडयसि पृच्छया ?
ततः खिन्नः स सत्त्वाढ्यो, मर्तुमैच्छद् विपादिभिः ॥ १३ ॥
५ साक्षादागत्य तं भानु–रूचेऽहं वत्स ! ते पिता ।
पराभवकरो यस्ते, तस्याहं प्राणहारकः ॥ १४ ॥
इत्युक्त्वा कर्करं सूक्ष्म–मेकं तस्य समार्पयत् ।
ताड्योऽनेन त्वया द्वेषी, सद्यो मर्तेति चादिशत्[2] ॥ १५ ॥
तेन कर्करशस्त्रेण, बालः स बलवत्तरः ।
१० विध्नन्तं विध्नन्त–मवधील्लेखशालिकम्[3] ॥ १६ ॥
'वलभी'पुरभूपेन, श्रुतो बालवधः स तु ।
कुपितस्तं शिशुं सद्यो, जनैः स्वान्तिकमानयत् ॥ १७ ॥
उक्तश्च रे कथं हंसि, नृशंस ! शिशुकानमून् ? ।
बालः प्रत्याह न परं, बालान् हन्मि नृपानपि ॥ १८ ॥
१५ इत्थं वदन् महीपाल–महन् कर्करकेण तम् ।
मृतस्य तस्य साम्राज्ये, स राजाऽजनि विक्रमी ॥ १९ ॥
शिलादित्य इति ख्यातः, 'सुराष्ट्रा'राष्ट्रभास्करः ।
लेभे सूर्याद् वरं वाहं[4], परचक्रोपमर्दकम् ॥ २० ॥
निजां स्वसारं स ददौ, 'भृगुक्षेत्र'महीभुजे ।
२० असूत सा सुतं दिव्य–तेजसं दिव्यलक्षणम् ॥ २१ ॥
'शत्रुञ्जये' गिरौ चैत्यो–द्धारमारचयच्च सः ।
श्रेणिकादिश्राद्धकाणां, श्रेणावात्मानमानयत्[5] ॥ २२ ॥
कदाचिदागतास्तत्र, बौद्धास्तर्कमदोद्धुराः ।
ते शिलादित्यमगदन्, सन्ति श्वेताम्बरा इमे ॥ २३ ॥

---

१ सुदृशम् । २ ख 'सदा द्वेषी सद्यो मर्तेति'। ३ घ–'शालकम्'।
४ क–ख–'वाहं'। ५ अथाग् ।

वादे जयन्ति यद्यस्मां–स्तदैते सन्तु नीवृति ।
वयं यदि जयामोऽमूं–स्तदा गन्तव्यमेतकैः ॥ २४ ॥
दैवयोगाज्जितं बौद्धैः, सर्वे श्वेताम्बराः पुनः ।
विदेशमाशिश्रियिरे, पुनः कालबलार्थिनः ॥ २५ ॥
शिलादित्यनृपो बौद्धान्, प्रपूजयति भक्तितः ।
[1]'शत्रुञ्जये' च ऋषभ–स्तैर्बुद्धीकृत्य पूजितः ॥ २६ ॥
इतश्च सा शिलादित्य–भगिनी भर्तृमृत्युतः ।
विरक्ता व्रतमादत्त, सुस्थिताचार्यसन्निधौ ॥ २७ ॥
अष्टवर्षं निजं बाल–मपि व्रतमजिग्रहत् ।
[3]सामाचारीमपि प्राज्ञं, किञ्चित् किञ्चिदजिज्ञपत् ॥ २८ ॥ १०
एकदा मातरं साध्वीं, सोऽपृच्छदभिमानवान् ।
अल्पः कथं नः सङ्घोऽय, प्रागल्पतपोऽभवत् कथम् ? ॥२९॥
साऽप्युदश्रुरभाषिष्ट, वत्स ! किं वच्मि पापिनी ? ।
श्रीश्वेताम्बरसङ्घोऽभूद्, भूयानपि पुरे पुरे ॥ ३० ॥
तादृक्प्रभावनाधीर–सूरीन्द्राभावत परैः । १५
[4]स्वसात्कृतः शिलादित्यो, भूपालो मातुलस्तव ॥ ३१ ॥
तीर्थं 'शत्रुञ्जया'ह्व यद्, विदितं मोक्षकारणम् ।
श्वेताम्बराभावतस्तद्, बौद्धैर्भूतैरिवाश्रितम् ॥ ३२ ॥
विदेशवासिनः श्वेता–म्बराः [5]खण्डितटम्बराः ।
क्षिपन्ति निहितौजस्काः, कालं कचन केचन ॥ ३३ ॥ २०
इति श्रुत्वाऽकुपद् बाल–स्तांधागतभटान् प्रति ।
प्रतिज्ञां च चकारोच्चैः, प्रावृडम्भोधरध्वनिः ॥ ३४ ॥
नोन्मूलयामि चेद् बौद्धान्, नदीरय इव द्रुमान् ।
तदा भवामि सर्वज्ञ–ध्वंसपातकभाजनम् ॥ ३५ ॥

---

१ देशे । २ क–'शत्रुञ्जयेऽस्ति' । ३ साधूनामाचारम् । ४ आत्मवशीकृतः
५ क-ख–'खण्डितडम्बराः' । ६ बौद्धवीरान् ।

इत्युक्त्वाऽम्बां समापृच्छ्य, बालः कालानलद्युतिः ।
मल्लनामा गिरिं गत्वा, तेपे तीव्रतरं तपः ॥ ३६ ॥
आसन्नग्रामभैक्षेण, पारणं च चकार सः ।
दिनैः कतिपयैस्तत्र, जज्ञौ शासनदेवता ॥ ३७ ॥
५ भूत्वा व्योमनि साऽवादीत्, के मिष्टाः सोऽपि बालकः ।
तच्छ्रुत्वाऽऽख्यत् सानुभवं, वल्ला इति खदच्चदृक् ॥ ३८ ॥
षण्मास्यन्ते पुनः सोचे, खस्था केन सहेत्यय ? ।
बालर्गिरप्यभाषिष्ट, समं घृतगुडैः शुभैः ॥ ३९ ॥
अवधारणशक्त्यां तं, योग्यं शासनदेवता ।
१० प्रत्यक्षा न्यगदद् वत्स !, भूयाः परमतापहः ॥ ४० ॥
नयचक्रस्य तर्कस्य, पुस्तकं लाहि मानद ! ।
वाणी सेत्स्यति ते सम्यक्, कुतर्कोरगजाङ्गुली ॥ ४१ ॥
भूमौ मुमोच तं तर्क-पुस्तकं बालको मुनिः ।
प्रमादः सुलभस्तत्र, वयोलीलाविशेषतः ॥ ४२ ॥
१५ रुष्टा शासनदेव्यूचे, विहिताऽऽशातना त्वया ।
सान्निध्यं ते विधाताऽस्मि, प्रत्यक्षीभविता न तु ॥ ४३ ॥
तं लब्ध्वा पुस्तकं मल्ल-वादी देदीप्यते स्म सः ।
शस्त्रं पाशुपतमिव, मध्यमः पाण्डुनन्दनः ॥ ४४ ॥
आगत्य 'वलभी'दङ्गं, 'सुराष्ट्र'राष्ट्रभूषणम् ।
२० शिलादित्यं युगप्रान्ता-दित्यद्युतिरुवाच सः ॥ ४५ ॥
श्रीदुर्मुधा जगत्त्रयं, प्रतिमल्लोऽहमुत्थितः ।
[2]अप्रमादी मल्लवादी, त्वदीयो भगिनीसुतः ॥ ४६ ॥
शिलादित्यनृपोपान्ते, बौद्धाचार्येण वाग्मिना ।
वादिवृन्दारकश्रेष्ठे, तर्कवर्गरमुत्त्रणम् ॥ ४७ ॥
२५ मल्लवादिनि जल्पाके, [3]नयचक्रचलोल्वणे ।

---

१ अर्जुनः । २ क घ-'अप्रवादी', ग-पुस्तके तु 'अप्रमादो' इति पाठः ।
३ ग-'नयतर्कघटो॰' ।

हृदये हारयामास, षण्मासान्ते स शाक्यराट् ॥ ४८ ॥
षण्मासान्तनिशायां स, स्व निशान्तमुपेयिवान् ।
तर्कपुस्तकमाकृष्य, कोशात् किञ्चिदवाचयत् ॥ ४९ ॥
चिन्ताचक्रहते चित्ते, नार्थांस्तान् धर्तुमीश्वरः ! ।
बौद्ध स चिन्तयामास, प्रातस्तेजोत्रयो मम ॥ ५० ॥ ५
श्वेताम्बरस्फुलिङ्गस्य, किञ्चिदन्यदहो महः ! ।
निर्वासयिष्यन्तेऽमी हा, बौद्धाः साम्राज्यशालिन ॥ ५१ ॥
धन्यास्ते ये न पश्यन्ति,देशभङ्गं कुलक्षयम् ।
परहस्तगतां भार्यां, मित्रं चापदि संस्थितम् ॥ ५२ ॥
इति दु खौघसङ्घट्टाद्, विददे तस्य हृत् क्षणात् । १०
नृपाह्वान समायात, पातस्तस्य श्रुत श्रुतम् ॥ ५३ ॥
नोद्घाटयन्ति तच्छिष्या, गृहद्वार वराककाः ।
मन्दो गुरुर्नाथ भूप--समामेतेति भाषिण' ॥ ५४ ॥
तद् गत्वा तत्र तैरुक्त, श्रुत्वा तन्मल्ल उल्लसन् ।
अवोचत्र शिलादित्य, मृतोऽसौ शाक्यराट् शुचा ॥ ५५ ॥ १५
स्वय गत्वा शिलादित्य--स्त तथास्यमलोकत ।
बौद्धान् मावासयद् 'देशाद्, धिक् प्रतिष्ठाच्युत नरम् ॥ ५६ ॥
मल्लवादिनमाचार्यं, कृत्वा वागीश्वर गुरुम् ।
विदेशेभ्यो जैनमुनीन्, सर्वानाजूहवन्नृपः ॥ ५७ ॥
'शत्रुञ्जये' जिनाधीशं, भवपञ्जरभञ्जनम् । २०
कृत्वा श्वेताम्बरायत्त, यात्रा प्रावर्तयन्नृपः ॥ ५८ ॥
कालान्तरे तत्र पुरे, रङ्को नामाभवद् वणिक् ।
तस्य कार्पटिको हट्टे, न्यासीचक्रे महारसम् ॥ ५९ ॥
रसेन तेन स्पृष्टस्य, लोहस्य स्वर्णीयताम् ।
स दृष्ट्वा हट्टसदन--परावर्त चकार वै ॥ ६० ॥ २५

---

१ क-ख-'प्रत्योरिदं पद्यं नास्ति' । २ 'बौद्धो' इति भाषायाम् । ३ क-ख घ-'देशात्' । ४ सुवर्णताम् । ५ क-'सः' ।

वञ्चयित्वा कार्पटिक, रङ्कः सोऽभून्महाधन ।
तत्पुत्र्या राजपुत्र्याश्च, सख्यमासीत् परस्परम् ॥ ६१ ॥
[1]हैमीं कङ्कतिकामेका, दिव्यरत्नविभूषिताम् ।
रङ्कपुत्रीकरे दृष्ट्वा, याचते स्म नृपात्मजा ॥ ६२ ॥
५ सा न दत्ते पुना रङ्को, राजा त याचते बलात् ।
तेनैव मत्सरेणासा, म्लेच्छसैन्यमुपानयत् ॥ ६३ ॥
भग्ना पू'वलभी' तेन, मञ्जातमसमञ्जसम् ।
शिलादित्यः क्षयं नीतो, वणिजा स्फीतऋद्धिना ॥ ६४ ॥
ततोऽप्याकृष्य वणिजा, प्रक्षिप्ताश्च रणे शका ।
१० तृष्णया ते स्वय मत्रु-र्ह(र्य)तो व्याधिर्महानयम् ॥ ६५ ॥
विक्रमादित्यभूपालात्, पञ्चर्पित्रिक(५७३)वत्सरे ।
जातोऽय 'वलभी'भङ्गो, ज्ञानिन प्रथम ययु ॥ ६६॥
खवर्त्मना गतान्यर्हद्-बिम्बानि विषयान्तरम् ।
देवताधिष्ठिताना हि, चेष्टा सम्भाविनी तथा ॥ ६७ ॥
१५ एतच्च प्रथम ज्ञात्वा, मल्लवादी महामुनि ।
सहित परिवारेण, 'पञ्चासर'पुरीमगात् ॥ ६८ ॥
'नागेन्द्र'गच्छसत्केषु, धर्मस्थानेष्वभूत् प्रभु ।
श्री'स्तम्भनक'तीर्थेऽपि, सङ्घस्तस्येशतामधात् ॥ ६९ ॥
श्रीमल्लवादिचरित जिनशासनीय-
२० तेज समुन्नतिपवित्रमिद निशम्य ।
भव्या ! कवित्वरचनादिविचित्रलब्धि-
भैति प्रभावयत शासनमार्हत भो ॥ ७० ॥
इति श्रीमल्लवादिचरित्रम् ॥ ७ ॥



१ ग-'हैमीकङ्कनीका०'। २ घ 'पुरा'। ३ ग 'अरिम'। ४ ग-'तृष्णाया ते स्वय मृत्वा, हतो'। ५ ख-'प्राप्दया'। ६ वसन्त०।

## [ ८ ]

## ॥ अथ श्रीहरिभद्रसूरिप्रबन्धः ॥

श्री'चित्रकूटे' **हरिभद्रो** विप्रश्चतुर्दशविद्यास्थानज्ञः[1] । दत्त्वा पादुकाः, पञ्चमदूरीकृतदर्शनान्यानि पञ्चममाद्य इति कृत्वा;[2] उदरे पट्टः, उदरं विद्यया स्फुटतीति कृत्वा । जालं कुद्दालो[3] निःश्रेणी[4] ५
सह चलन्ति । यत्पठितमहं न जानामि तस्य शिष्यो भवामीति प्रतिज्ञा । एकदा चतुष्पथासन्नभूमिं व्रजता गाथामेकां पठ्यमाना[5] **याकिनी** नाम साध्वी श्रुता[6] । तया

"[7]चक्किदुग हरिपणग, पणग चक्कीण केसवो चक्की ।
केसव चक्की केसव–दुचक्किकेसी य चक्की य ॥ १ ॥"[8] १०

इति गाथा पेठे । न च तेन बुद्धा । अग्रे गत्वोक्तम्—मातः ! खरं[9] चिकचिकापितम् । साध्व्योक्तम्— नव लिप्तम् । अहो अनयाऽहमुत्तरेणापि जितः । इति तां ववन्दे । त्वच्छिष्योऽस्मि । गाथार्थं ब्रूहि मातः ! । सा प्राह स्म— मम गुरवः सन्ति । **हरिभद्रः** प्राह— क्व ते ? । अत्र[10] सन्ति । ततः केनापि श्रावकेण १५
स चैत्यं नीतः । जिनदर्शनं तत्प्रथमम् । हर्षः ।

"वपुरेव तवाचष्टे, भगवन् ! वीतरागताम् ।
न हि कोटरसंस्थेऽग्नौ, तरुर्भवति शाद्वलः ॥ १ ॥"[11]

---

१ " षडङ्गमिश्रिता वेदा, धर्मशास्त्रं पुराणकम् ।
मीमांसा तर्कमपि च, एता विद्याश्चतुर्दश ॥"
२ ग 'दपाद्गुरामदूरीकृतं दर्श०' । ३ 'कोदाली' इति भाषायाम् । ४ क, ख-घ 'दत्तम्' ।
५ ग-पुस्तके 'गाथामेकां पठ्यमाना' एतदधिकम् । ६ ग पुस्तके 'श्रुता' एतदधिकम् ।
७ छाया— चक्रिद्विकं हरिपञ्चकं पञ्चकं चक्रिणां केशवश्चक्री ।
केशवश्चक्री केशवद्विचक्रिकेशिनौ च चक्री च ॥
८ आर्या । ९ ख 'खर' । १० 'अत्र सन्ति । ततः केनापि श्रावकेण' इत्यधिकं ग पाठः । ११ अनुष्टुप् ।

'जं दिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं
आयारो पसमायरो परियरो संतो पसन्ना तणू ।
तं नूणं जरजम्ममच्चुहरणो देवाहिदेवो इमो
देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ २ ॥'

५ इत्यादि नवीननमस्कारा । ततो जिनभद्राचार्यदर्शनम् । प्रतिपत्तिः । चारित्रम् । सूरिपदवी । आवश्यके 'चक्की'त्यादिदुष्करत्वादावश्यकं तेनैव विवृतम् । 'कलिकालसर्वज्ञ' इति बिरुदम् । रहस्य-पुस्तकं देवताभ्यो लब्धम् । ते चादरेण जितदिक्पटाचार्याच्छिन्न ८४मठप्रतिबद्ध८४नामकप्रासादस्तम्भे विविधौषधनिष्पन्ने उज्ज्वल-
१० नायसाम्ये क्षिप्ताः ।

एकदा भागिनेयौ हंस परमहंसौ पाठयति प्रभुः । निष्पन्नौ, परं बौद्धतर्कास्तन्मुखेन पिपाठयिषुः । गुरुणा ज्ञानिना वार्यमाणावपि तत्पार्श्वे गतौ । जरतीगृहे उत्तारकः । बौद्धाचार्यान्तिके तद्वेषस्थौ पठतः । कपलिकायां रहस्यानि लिखतः । प्रतिलेखनादिसंस्कारवशाद्
१५ दैवात् इव ज्ञात्वा गुरुणाऽचिन्ति—ध्रुवं श्वेताम्बरावेतौ । द्वितीयाह्नि सोपानश्रेण्यां खट्याऽर्हद्बिम्बमालिलिखे । तदासन्नायातौ तौ पादौ तत्र न दत्तः । रेखात्रयाङ्कस्तत्कण्ठयज्ञे । बुद्धोऽप्यत्र जात इति कृत्वा उपरि पादौ दत्तः । उपरि चटितौ । गुरुणा दृष्टौ । गुरोः समक्षं निषण्णौ । तौ गुर्वास्यच्छायापरावर्तं दृष्ट्वा तत्रैतत्र तत्क्षणमेव मत्वा
२० जठरपीडामिषेण ततो निरगमताम् । कपलिका त्वरया गतौ तौ चिरादायातौ । निरीक्षापितौ न स्तः । राजाग्रे कथितम्—

१ छाया—यद् दृष्टिः करुणातरङ्गितपुटा एतस्य सौम्यं मुखम्
आकारः प्रशमाकरः परिकरः शान्तः प्रसन्ना तनुः ।
तद् नूनं जराजन्ममृत्युहरणो देवाधिदेवोऽयं
देवानामपरेषां दृश्यते यतो नेदं स्वरूपं जगति ॥
२ शार्दूल० । ३ '[illegible]' इत्यधिको [illegible]—पाठः । ४ [illegible] 'ही पुण्या' ।
५ '[illegible]' इति [illegible] । ६ [illegible] । ७ [illegible] '[illegible]' ६ ८ [illegible] पुस्तके
[illegible] पुनरुक्तिं [illegible] ।

सितपटाबुद्धकपटौ तत्र लात्वा यातः । कपर्दिकामानायय । पृष्ठे सैन्यमल्पं गतम् । दृष्टिदृष्टिः । द्वावपि सहस्रयोधौ तौ । ताभ्यां निहतं राजसैन्यम् । उद्धृतनष्टैकः राज गत्वा कथितं तत्तेजः । पुनर्बहुसैन्यं प्रैषि । दृष्टिमेलापकः । युद्धमेकः करोति । अपरः कपर्दि(र्लि[?])कामाणिर्नष्टः । हंसस्य शिरश्छित्त्वा राज्ञे दर्शितं तैः । तेनापि ५ गुरवे दत्तम् । गुरुराह—किमनेन [1] । कपर्दि(र्लि[?])कामानायय । गता भटाः । रात्रौ ' चित्रकूटे ' प्राकारकपाटयोर्दत्तयोस्तदासन्ने सुप्तस्य परमहंसस्य शिरश्छित्त्वा तैस्तत्रार्पितम् । तेषां बौद्धानां तत्सूरेश्च सन्तोषः । प्रातः श्रीहरिभद्रसूरिभिः शिष्यकबन्धो दृष्टः । कोपः । तैलकटाहाः कारिता । अग्निना तापितं तैलम् ।१४४० १० बौद्धा होतुं च आकृष्टाः [1]शकुनिकारूपेण पतन्ति । गुरुभिर्वृत्तान्तो [2]ज्ञातः । [3]प्रतिबोधाय साधू प्रहितौ । ताभ्यां गाथा दत्ता—

"[4]गुणसेण-अग्गिसमा सीहा-ऽऽणंदा य तह पिया-पुत्ता ।
सिहि-जालिणि माइ-सुया धण धणसिरिमो य पइ-भज्जा ॥१॥[5]
[6]जय-विजया य सहोयर धरणो लच्छी य तह पई भज्जा । १५
[7]सेण-विसेणा पित्तिय-उत्ता जम्मंमि सत्तमए ॥ २ ॥
[8]गुणचंद-[9]वाणमंतर समराइच्च गिरिसेणपाणो उ ।
एगस्स तओ मुक्खो-ऽणंतो बीयस्स संसारो ॥ ३ ॥

---

१ म-पुस्तके ' शकुनिकारूपेण पतन्ति ' एतदधिकं विद्यते । २ घ- 'ज्ञापित' ।
३ ग-पुस्तके 'प्रतिबोधाय' एतदधिकं वर्तते ।
४ छाया—गुणसेना ऽग्निशर्माणौ सिंहा-ऽऽनन्दौ च तथा पितापुत्रौ ।
शिखि-जालिन्यौ मातासुते धन-धनश्रियौ च पतिभार्ये ॥
५ अस्य पद्यस्यानन्तरीयस्य च पद्यद्वितयस्य छन्द 'आर्या' वर्तते।
६ छाया—जय-विजयौ च सहोदरौ धरणो लक्ष्मीश्च तथा पतिभार्या ।
सेन विषेणौ पितृव्यपुत्रौ जन्मनि सप्तमे ॥
७ घ- सेनविसेना पत्तियं ।
८ छाया—गुणचन्द्र-वानव्यन्तरौ समरादित्यो गिरिषेणप्राण ("मातङ्ग") तु ।
एकस्य ततो मोक्षोऽनन्तो द्वितीयस्य संसारः ॥
९ म-'वाणमंतर' ।

जंह जलइ जलउ लोए, कुसत्थपवणाहओ कसायग्गी।
तं चुज्जं जं जिणवयणअमियसित्तो वि पज्जलइ ॥ ४ ॥"

बोध । शान्ति । १४४० ग्रन्था प्रायश्चित्तपदे कृता[2]। 'चित्रकूट'तलहट्टिकास्थेन तैलवणिजा प्रतय कारिताः । तत्प्रथम
५ याकिनीधर्मसूनुरिति हारिभद्रग्रन्थेष्वतोऽभूत । १४४० पुनर्भव विरहान्तता । 'गुणसेण-अग्गिसम्मा'इत्यादिगाथात्रयप्रतिबद्ध समरादित्यचरित्रं नव्य शास्त्र क्षमावल्लीबीज कृतम् । [3]१०० शतक-पञ्चाशत् षोडशक अष्टक- पञ्चलिङ्गी-अनेकान्तजय- पताका न्यायावतारवृत्ति पञ्चवस्तुक पञ्चसूत्रक श्रावकप्रज्ञ प्ति
१० -नाणायत्तकप्रभृतीनि हारिभद्राणि ।

अत्रान्तरे 'श्रीमाल'पुरे कोऽपि धनी श्रेष्ठी जैनश्चेतुर्मासके सपरिकरो देवतायतन व्रजन् सिद्धाख्य राजपुत्र द्यूतकार युनान देयकनकपदे निर्दयैर्द्यूतकारैर्गर्ते या निक्षिप्त कृपया तद्देय दत्त्वाऽमोचयत् । गृह- मानीयाभोजयत् । अपाठयत् । सर्वकार्याध्यक्षमकरोत् । पर्यणाययत् ।
१५ माता प्रागप्यासीत् । पृथग् गृहेऽस्थात् । मात्रा प्रियया च समं स गृहमण्डनिका । श्रेष्ठिप्रसादाद् धन वैभूव । सिद्धो रात्रौ अतिकाले एति, लेख्यकलेखलेखनपरवशत्वात् । श्वश्रू स्नुषे अतिनिर्विण्णे, अतिजागरणात् । वध्वा श्वश्रूरुक्ता— मात ! पुत्र तथा बोधय यथा निशि सकाले एति । मात्रा उक्त स — वत्स ! निशि शीघ्रमेहि,
२० य कालज्ञ स सर्वज्ञ । सिद्ध प्राह— मात ! येन स्वामिनाऽह सर्वस्वदानेन जीवितव्यदानेन च समुद्धृतस्तदादेश कथ न कुर्वे ? । तौष्णीकयेन स्थिता माता । अन्यदाऽऽलोचित श्वश्रू-स्नुषाभ्याम्-

---

१ छाया—यथा ज्वलति ज्वलतु लोके कुशास्त्रपवनाहतः कषायाग्निः ।
तच्च चित्रं यज्जिनवचनामृतसिक्तोऽपि प्रज्वलति ॥
२ ग-'ग्रन्थेष्वभूत्' । ३ एतस्य चिरघुना दुर्लभा । ४ न ज्ञायते एतदुपलब्धि । ५ क-'धर्मभागे' । ६ ग-पुस्तके गृहे अस्थानन्तर 'अस्थात् । मात्रा प्रियया च समं स' एतदधिक वर्तते । ७ ग-पुस्तके बभूव एतदधिकमस्ति ।

अस्य चिरादागतस्य निशि द्वारं नोद्घाटयिष्यथ । द्वितीयरात्रावति-
[1]चिराद् द्वारमागतः स कटकं [2]खटपटापयति । ते तु न ब्रूत ।
तेन क्रुद्धेन गदितम्— किमिति द्वारं नोद्घाटयेथे [3]। ताभ्यां
मन्त्रितपूर्वाभ्यामुक्तम्—यत्रेदानीं द्वाराणि उद्घाटितानि भवन्ति तत्र
व्रज । तच्छ्रुत्वा क्रुद्धश्चतुष्पथं गतः । तत्रोद्घाटे हट्टे उपविष्टान् ५
सूरिमन्त्रस्मरणपरान् श्रीहरिभद्रान् दृष्टवान् । सान्द्रचन्द्रिके नभसि
देशना । बोधः । व्रतं जगृहे । सर्वविद्यता दिव्यं कवित्वम् ।
हंस परमहंसनामानौ विशेषतर्कार्थं जिघृक्षुर्बौद्धसन्निकं जिगमिषु-
र्गुरुमवादीत्— प्रेषयत बौद्धपार्श्वे । गुरुभिर्गदितम्—तत्र मा
गा, मनःपरावर्तो भावी । स ऊचे— युगान्तेऽपि नैव स्यात् । १०
पुनर्गुरव प्रोचु — तत्र गतः परावर्त्यसे चेत् तदा अस्मदत्त
वेषमत्रागत्यास्मभ्यं ददीथाः । ऊरीचक्रे सः । गतस्तत्र, पठितु
लग्नः । कुघटितैस्तत्कुतर्कैः परावर्तितं मनः । तद्दीक्षा लली । वेष
दातुमुपश्रीहरिभद्रं ययौ । तैःप्यार्गच्छन्नावर्जितो वादं कुर्वन् वादेन
जितः । बौद्धाचार्यस्य बौद्धवेषं दातुं गतः । तेनापि बोधितः । १५
पुनरागत उपश्रीहरिभद्रं श्वेताम्बरवेषं दातुम् । पुनर्वादेन जितः ।
एवं वेषद्वयप्रदानेन एकविंशतिवारा[4] २१ कृताः । द्वाविंशवेलायां
गुरुभिश्चिन्तितम्— माऽस्य वराकस्य आयुःक्षयेण मिथ्यादृष्टित्वे
मृतस्य दीर्घभवभ्रमणं भूयात् । पुराऽपि २१ वारान् वादे जितो
[5]ऽसौ । अधुना वादेनालम् । ललितविस्तराख्या चैत्यवन्दना- २०
वृत्तिः सतर्का कृता । तदागमे पुस्तिकां पादपीठे मुक्त्वा गुरवो
बहिर्गुः । तत्पुस्तिकापरामर्शाद् बोधः समजनि । ततस्तुष्टो
निश्चलमना प्राह—

---

१ क ...चरं । २ ख– 'खट...यति', ग – खण्पटापयति । ३ क–
'टर्कान्ति०'। ४ क ख– गच्छन्(?) जगति । ५ ग पुस्तके 'वादं
इत्यारभ्य पुनर्वादेन जितः' एतत्पर्यन्तमधिकं विद्यते । ६ घ 'वारं वादेर्जितो'।
७ क–'बोधो सम्यक्'।

नमोऽस्तु हरिभद्राय, तस्मै प्रवरसूरये ।
मदर्थे निर्मिता येन, वृत्तिर्ललितविस्तरा ॥ १ ॥[1]

ततो मिथ्यात्वनिर्विण्णेन [2]सिद्धर्षिणा [3]१६ सहस्रा उपमिति-भवप्रपञ्चा कथाऽरचि 'श्रीमाले' [4]सिद्धिमण्डपे । सा च
५ सरस्वत्या साध्व्याऽशोधि । समये श्रीहरिभद्रसूरयोऽपि सोऽपि अनशनेन सुरलोकमगापन् ॥ इति चरित्रम् ।

इति श्रीहरिभद्रसूरिप्रबन्धः ॥ ८ ॥



---

१ मन्तुकृतौ श्रीउपमितिभवप्रपञ्चकथायशस्तिगत निम्नाङ्कित पद्यम्–
"अनागतं परिज्ञाय चैत्यवन्दनसंश्रया ।
मदर्थेव कृता येन, वृत्तिर्ललितविस्तरा ॥ १७ ॥"
२ मङ्गुरु । ३ ख घ–'सिद्धिश्रीर्षिणा । ४ ग '१८' । ५ ख घ–'धिसि(?)मण्डपे' ।

[ ९ ]

## ॥ अथ श्रीबप्पभट्टिसूरिप्रबन्धः ॥

'गूर्जर'देशे 'पाडलीपुर'नगरे जितशत्रू राजा राज्यं करोति स्म। तत्र श्रीसिद्धसेननामा सूरीश्वरोऽस्ति स्म। स 'मोढेर'पुरे महास्थाने श्रीमहावीरनमस्करणाय गतः। महावीरं नत्वा तीर्थोपवासं कृत्वा रात्रावात्मारामरतो योगनिद्रया स्थितः सन् स्वप्नं ददर्श, यथा— केसरिकिशोरको देवगृहोपरि क्रीडति। स्वप्नं लब्ध्वाऽजागरीत्। माङ्गल्यस्तवनान्यपाठीत्। प्रातश्चैत्यं गतः। तत्र षड्वार्षिको बाल एको बालांशुमालिसमद्युतिराजगाम। सूरिणा पृष्टः— भो अर्भक! कस्त्वम्? कुत आगतः? । तेनोक्तम् —'पञ्चाल'देशे 'डुंबाउधी' ग्रामे बप्पाह्वयः क्षत्रियः। तस्य भट्टिर्नाम सधर्मचारिणी। तयोः सूरपालनामपुत्रोऽहम्। मत्तातस्य बहवो भुजबलगर्विताः प्रचुरपरिच्छदाः शत्रवः सन्ति। तान् सर्वान् हन्तुमहं सन्नद्ध चलत्कासम्। पित्रा निषिद्धः—वत्स! बालस्त्वम्, नास्मै कर्मणे प्रगल्भसे; अलमुद्योगेन। ततोऽहं क्रुद्धः—किमनेन निरभिमानेन पित्राऽपि यः स्वयमरीन् न हन्ति मामपि घ्नन्तं निवारयति? । अपमानेन मातापितरावनापृच्छ्यात्र समागतः। सूरिणा चिन्तितम्— अहो दिव्यं रत्नम्! न मानवमात्रोऽयम्; तेजसां हि न वयः समीक्ष्यते। इति विमृश्य बाल आलेपे— वत्सरु! अस्माकं पार्श्वे तिष्ठ निजगृहाधिकसुखेन। बालेनोक्तम्— महान् प्रसादः। स्वस्थानमानीतः। सद्यो हृष्टस्तद्रूपविलोकनेन। दृष्टयस्तृप्तिं न मन्यते। पाठयित्वा विलोकितः। एकाहेन श्लोकसहस्रमध्यगीष्ट। गुरवस्तुष्टुः। रत्नानि पुण्यप्रचय-

१ घ-प्रतौ प्रबन्धोऽयं 'आमप्रबन्ध'नाम्ना समस्ति। २ ग-'बप्पभट्टसूरि०'। ३ ग-'पाडलपुर०', घ-'पाडलापुर०'। ४ क-'अत्र'। ५ ग-'श्रीमहा०'। ६ ग-'डूंबा०'। ७ ग-'मन्यते'।

प्राप्याणि। धन्या वयम्। तेन बालेनाप्यल्पदिनैर्लक्षण-तर्क-साहित्यादीनि भूयांसि शास्त्राणि पर्यशीलिषत। ततो गुरवो [1]'डुआउधी'ग्राम जग्मुः। बालस्य पितरौ वन्दितुमागतौ। गुरुभिरालापितौ—'पुत्रा भवन्ति भूयांसोऽपि, किं तैः संसारावकरकृमिभिः ? अयं तु युवयोः पुत्रो व्रतयोग्यो वर्तते। दीयतां नः। गृह्यतां धर्मः। नष्टं मृतं सहन्ते हि पितरौ निजतनयम्। ख्याप्योऽयं मम नितिरतीर्थे'। पितृभ्यामुक्तम्—'भगवन्! अयमेक एव नः कुलतन्तुः कथं दातुं शक्यते?'। तावता सविधस्थेन सूरपालेन गदितम्—'अहं चारित्रं गृह्णाम्येव। यतः—

> सा बुद्धिर्विलयं प्रयातु कुलिशं तत्र श्रुते पात्यतां
> ‍ ‍ ‍ ‍ वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः।
> ये सर्वे शरदिन्दुकुन्दविशदे प्राप्तेऽपि प्राप्यते
> ‍ ‍ ‍ ‍ भूयोऽप्यत्र पुरन्ध्रिरन्ध्रनरकक्रोडाधिवासव्यथा ॥ १ ॥'

ततो [3]ज्ञाततन्निश्चयाभ्यां तन्मातापितृभ्यां जल्पितम्—'भगवन्! गृहाण पात्रमेतत्। परं बप्पभट्टिरिति नामास्य कर्तव्यम्।' गुरुभिर्भणितम्—'एवमस्तु। कोऽत्र दोषः?'। पुण्यवन्तौ युवां ययोरयं लाभः सम्पन्नः। बप्पभट्टी आपृच्छ्य सूरपालं गृहीत्वा सिद्धसेनाचार्या 'मोढेरक' गताः।

> शताष्टके वत्सराणां, गते विक्रमकालतः।
> सप्ताधिके राधशुक्ल-तृतीयादिवसे गुरौ ॥ १ ॥[5]

दीक्षा दत्ता। बप्पभट्टिरिति नाम विश्ववल्लभं जुघुषे। सङ्घप्रार्थनया तत्र चतुर्मासकं कृतम्। अन्यदा बहिर्भूमिं गतस्य बप्पभट्टेर्महती वृष्टिरतनिष्ट घनः। क्वापि देवकुले स्थितः [4]। तत्र देवकुले महायुधः कोऽपि पुमान् समागतः। तत्र देवकुले प्रशस्तिकाव्यानि श्लाघ्यानि गम्भीरार्थानि तेन बप्पभट्टिपार्श्वाद् व्याख्या-

---

१ घ-'डुवा०'। २ शार्दूल०। ३ घ-'ज्ञाततन्निश्चया'। ४ घ-'दृष्टि०'। ५ अनुष्टुप्। ६ घ-'बोध'।

पितानि । तत्र स बप्पभट्टिना समं वसतिमायातः । गुरुभिराशी-
र्भिरभिनन्दितः । आम्नायं स पृष्टः । ततोऽसौ जगाद—भगवन् !
'कन्यकुब्ज'देशे 'गोपालगिरि'दुर्गनगरे यशोवर्मनृपते[1] सुयशा-
देवीकुक्षिजन्मा नन्दनोऽहं यौवनेन निरर्गलं धनं लीलया व्ययन्
पित्रा कुपितेन शिक्षितः—वत्स ! धनार्जकस्य कृच्छ्रमस्यानव्यया ५
पुत्रो न वेत्ति तातस्य, मितव्ययो भव । ततोऽहं कोपादिहागमम् ।
गुरवोऽप्यूचुः—किं ते नाम ? । तेनापि खटिकया भुवि लिखित्वा
दर्शितम् आम इति । महाजनाचारपरम्परेदृशी—'स्वनाम नामा
ददते न साधवः' । तस्यौज्ज्वल्येन गुरवो हृष्टाः । चिन्तितं च तैः—
पूर्वं श्रीरामसैन्ये ग्रामे दृष्टोऽसौ षाण्मासिकः शिशुः । १०

पीलुवृक्षमहाजाल्या, वैल्लदोलकमाश्रितः ।
'अचलच्छायया च, पुण्यपुरुषो निर्णितः ॥'

ततस्तज्जननी वन्यफलानि विचिन्वानाऽस्माभिर्भणिता—वत्से !
का त्वम् ? । 'किञ्च ते कुलम् ? । साऽवादीत् निजं कुलम्—अहं
राजपुत्री 'कन्यकुब्जे'शयशोधर्मपत्नी सुयशा नाम । अहमस्मिन् १५
सुते गर्भस्थे सति दृढकार्मणवशीकृतधवया यत्कृतप्रमाणया कृत्यये
व क्रूरया सपत्न्या मिथ्या परपुरुषदोषमारोप्य गृहान्निष्कासिता ।
अभिमानेन श्वशुरकुलं पितृकुले हित्वा भ्रमन्तीह समागता वन्यवृत्त्या
जीवामि । बालं च पालयामि । इदं श्रुत्वाऽस्माभिस्तां उक्ता—
वत्से ! अस्मच्चैत्ये समागच्छ स्व वत्सं[10] प्रवर्धय । तया तथा कृतम् । २०
सपत्न्यपि बहुसपत्नीकृतमारणप्रयोगेण[11] ममार । ततो विशिष्ट-
पुरुषैः 'कन्यकुब्जे'शो यशोधर्मा विज्ञप्तः — देव ! सुयशा
राज्ञी निर्दोषाऽपि तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्या-

---

१ ग-'वर्म॰ । २ क-घ सुशया (?यशा)॰, ग-पुस्तके तु 'सुयशो॰' ।
३ घ 'पद परेदशी । ४ ख 'ग्रामऽसा दृष्ट षाण्मासिकः शिशु । ५ ख-'वल्लान्दोल॰ ।
६ सप्ताक्षरात्मक चरणमिदम् । ७ अनुष्टुप् (?)। ८ घ -'किंवा ते'। ९ ग-'यशोधर्म॰'।
१० ख ग- वर्धय' । ११ क-'प्रयोगैर्ममार' ।

नीयते । राज्ञा सा स्वसौधमानायिता सपुत्रा गौरविता च ।

अन्यदा विहरन्तो वयं तस्या देशं गताः । तया पूर्वप्रतिपन्नं स्मरन्त्या वयं वन्दिताः पूजिताः । अनेन आमनाम्ना तत्सुतेन भाव्यम् । एवं चिरं विभाव्य सूरयस्तमूचुः— वत्स ! वस
५ निश्चिन्तो निजेन सुहृदा बप्पभट्टिनाम्ना सममस्मत्सन्निधौ । त्व गृहाण कलाः । कास्ताः ?—लिखितम् १ गणितम् २ गीतम् ३ नृत्यम् ४ वाद्यम् ५ पठितम् ६ व्याकरणम् ७ छन्दो ८ ज्योतिषम् ९ शिक्षा १० निरुक्तम् ११ कात्यायनम् १२ निघण्टुः १३ पत्रच्छेद्यम् १४ नखच्छेद्यम् १५ रत्नपरीक्षा १६
१० आयुधाभ्यासः १७ गजारोहणम् १८ तुरगारोहणम् १९ तयोः शिक्षा २० मन्त्रवादः २१ यन्त्रवादः २२ रसवादः २३ खन्यवादः २४ रसायनम् २५ विज्ञानम् २६ तर्कवादः २७ सिद्धान्तः २८ विषवादः २९ गारुडम् ३० शाकुनम् ३१ वैद्यकम् ३२ आचार्यविद्या ३३ आगमः ३४ प्रासादलक्षणम्
१५ ३५ सामुद्रिकम् ३६ स्मृतिः ३७ पुराणम् ३८ इतिहासः ३९ वेदः ४० विधिः ४१ विद्यानुवादः ४२ दर्शनसंस्कारः ४३ खेचरीकला ४४ अमरीकला ४५ इन्द्रजालम् ४६ पातालसिद्धिः ४७ धूर्तशम्बलम् ४८ गन्धवादः ४९ वृक्षचिकित्सा ५० कृत्रिममणिकर्म ५१ सर्वकरणी ५२ वैश्यकर्म ५३ पणकर्म
२० ५४ चित्रकर्म ५५ काष्ठघटनम् ५६ पाषाणकर्म ५७ लेपकर्म ५८ चर्मकर्म ५९ यन्त्रकरसवती ६० काव्यम् ६१ अलङ्कारः ६२ हसितम् ६३ संस्कृतम् ६४ प्राकृतम् ६५ पैशाचिकम् ६६ अपभ्रंशम् ६७ कपटम् ६८ देशभाषा ६९ [4]धातुकर्म ७० प्रयोगोपायः ७१ [6]केवलीविधिः ७२ । एताः सकलाः कलाः
२५ शिक्षितवान् । लक्षण-तर्कादिग्रन्थान् परिचितवान् । बप्पभट्टिना

---

१ ग–'भ्यासः'। २ घ–'शम्बलं'। ३ ख–'पशाकर्म'। ४ घ–प्रतौ एषा कला नोल्लिखिता। ५ ग–'पायम्'। ६ घ–'केवली ७१ विधिः ७२'।

साक'मस्थिमज्ज'न्यायेन प्रीतिं बद्धवान् । यत —
'आरम्भगुर्वी क्षयिणी क्रमेण, ह्रस्वा पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना, छायेव मैत्री खल-सज्जनानाम् ॥१॥'
कियत्यपि गते काले यशोधर्मनृपेणासाध्यव्याधिसेन पट्टाभि-
षेकार्थमामकुमाराकारणाय प्रधानपुरुषा प्रेषिता । अनिच्छन्नपि ५
तैस्तत्र नीत । 'पितुर्मिलित । पित्राऽऽलिङ्गित सबाष्पगद्गद
मुपालब्धश्च—

धिग् वृत्ततुरसमुचितो शुचिता विगेता
धिक् कुन्दसुन्दरगुणग्रहणाग्रहित्वम् ।
चक्रेऽङ्कसीम्नि तव मौक्तिक ! येन वृद्धि- १०
र्वार्द्धेन तस्य कथमप्युपयुज्यसे यत् ? ॥ २ ॥'

अभिषिक्तं स्वराज्ये । शिक्षितश्च प्रजापालनादौ । एतत् कृत्वा
यशोधर्मा अर्हन्त त्रिधा शुद्ध्या शरण श्रयन् द्यां गत ।
आमराजा पितुरौर्ध्वदेहिक कृतवान् । द्विजादिदीनलोकाय वित्त
दत्तवान् । लक्षत्रितयमश्वानां हस्तिना रथाना च प्रत्येक १५
चतुर्दशशती एका कोटी पदातीना । एव राज्यश्री श्रीआमस्य
न्यायरामस्य । तथापि बप्पभट्टिमित्र विना सर्वं पलालपूलप्राय
मन्यते स्म स । ततो मित्रानयनाय प्रधानपुरुषान् प्रैषीत् ।
तेस्तत्र गत्वा विज्ञप्तम —- हे श्रीबप्पभट्टे ! आमराज समुत्क-
ण्ठयाऽऽह्वयति, आगम्यताम् । बप्पभट्टिना गुरूणां वदनकमलम २०
वलोकितम् । ते सङ्घानुमत्या गीतार्थयतिभि सम बप्पभट्टि
मुनि. प्रहित । आमस्य पुरं 'गोपालगिरिं' प्राप । राजा सबल
वाहन सम्मुखमगात्, प्रवेशमहमकार्षीत्, सौधमानैषीत् । अवोचत
च—भगवन् ! अर्धराज्य गृहाण । तेनोक्तम्—अस्माक निर्ग्रन्थाना
सावद्येन राज्येन किं कार्यम् ? । यत — २५

१ घ 'आपातगुर्वी । २ उपजाति । ३ घ 'पितुर्मिलित । ४ वसन्त० ।
५ ख-घ पित्रा राज्ये' ।

अनेकयोनिसम्पाता–ऽनन्तबाधाविधायिनी ।
अभिमानफलैवेयं, राज्यश्री साऽपि नश्वरी ॥ १ ॥[1]

ततो राज्ञाऽसौ तुङ्गधवलगृहे स्थापित । प्रात सभामागताय बप्पभट्टये नृपेण सिंहासनं मण्डापितम् । तेन गदितम्—उर्वीपते ! आचार्यपद विना सिंहासनं न युक्तम् । गुर्वाशातना
५ भवेत् । ततो राज्ञा बप्पभट्टिः प्रधानसचिवै. सह गुर्वन्तिके प्रहित । विज्ञप्तिका च दत्ता—यदि मम प्राणै कार्यं तदा प्रसद्य सद्योऽयं महर्षि सूरिपदे स्थाप्य । 'योग्य सुत च शिष्य च, नयन्ति गुरव श्रियम् ।' स्थापितमात्रश्चायं शीघ्रं प्रेषणीय ।
१० अन्यथाऽहं न भवामि । मा विलम्ब्यतामिति । अखण्डप्रयाणै मोढेरकं प्राप्तो बप्पभट्टि । सचिवै. सूरयो विज्ञप्ता — प्रभो ! राजविज्ञप्त्यर्थोऽनुसार्य, उचितज्ञा हि भवादृशा ।

अथ श्रीसिद्धसेनाचार्यैर्बप्पभट्टिः सूरिपदे स्थापित । तदङ्गे श्री साक्षादिव सङ्क्रामन्ती दृष्टा । रहश्च शिक्षा दत्ता— वत्स !
१५ तव राजसत्कारो भृश भावी । ततश्च लक्ष्मी प्रसरिष्यति । तत इन्द्रियजयो दुष्कर । त्वं महाब्रह्मचारी भवे ।

"[4]विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीरा[5]"
अनेन महाव्रतेन महत्तर स्फुरिष्यसि ।

एकादशाधिके तत्र, जाते वर्षशताष्टके ।
२० विक्रमात् सोऽभवत् सूरि, कृष्णचैत्राष्टमीदिने ॥१॥[6]

गुरुणा आमराजसमीपे प्रेषित । तत्र प्राप्त । 'गोपगिरे' प्रासुकवनोद्देशे स्थित । राजा अभ्यागत्य महामहेन त पुरीं प्रावीविशत् । श्रीबप्पभट्टिसूरिणा तत्र देशना क्लेशनाशिनी दत्ता —

श्रीरियं प्रायश पुंसा–मुपस्कारैककारणम् ।
२५ तामुपस्कुर्वते ये तु, रत्नसूस्तैरसौ रसा ॥ १ ॥[7]

---

१ अनुष्टुप् । २ ग 'धार्मकमोढेरक' । ३ क- भव । ४ कुमारसम्भवे (स १, श्लो ५९) । ५ ग-धीरा । ६, ७ अनुष्टुप् ।

आमेन गुरूपदेशादेकोत्तरशतहस्तप्रमाणं प्रासादं कारयामासे 'गोपगिरौ'। अष्टादशभारप्रमाणं श्रीवर्धमानबिम्बं तत्र निवेशयाम्बभूवे। प्रतिष्ठा निधापयाञ्चक्रे। तत्र चैत्ये मूलमण्डपः सपादलक्षेण सौवर्णटङ्कैर्निष्पन्न इति वृद्धा प्राहुः। आमः कुञ्जरारूढः [1]सर्वर्द्धया चैत्यवन्दनाय याति। मिथ्यादृशां दृशौ सैन्धवेन पूर्येते, सम्यग्दृशां स्वमृतेनेव। एवं प्रभावना। प्रातर्नृपो [2]मौलमनर्घ्यं स्वं सिंहासनं सूरये निवेशापयति। तद् दृष्ट्वा विप्रैः क्रुधा ज्वलितैर्भूपो विज्ञप्तः—देव! श्वेताम्बरा अमी शूद्राः। एभ्यः सिंहासनं किम् [3]। अथास्तां तत्। परं [4]लघीयो भवतु, न महत्। मुहुर्मुहुस्तैरित्थं विज्ञप्त्या कदर्थ्यमानः पार्थिवो मौलसिंहासनं कोशगं कारयित्वाऽन्यल्लघ्वासनमदात्। प्रत्यूषे सूरीन्द्रेण तद् दृष्ट्वा रूपेनैव राज्ञोऽग्रे पठितम्—

मर्दय मानमतङ्गजदर्पं, विनयशरीरविनाशनसर्पम्।
क्षीणो दर्पाद् दशवदनोऽपि, यस्य न तुल्यो भुवने कोऽपि ॥१॥[6]

इदं श्रुत्वा राज्ञा क्षणेन सदा भूयो मूलसिंहासनमनुज्ञातम्। अपराधः क्षमितः। एकदा सपादकोटी हेम्ना दत्ता गुरुभ्यः। तैर्निरीहैः सा जीर्णोद्धारे ऋद्धियुक्तधानकपार्श्वाद् व्ययिता। अन्यदा शुद्धान्ते म्लानवदना वल्लभा दृष्ट्वा प्रभोः पुरो गाथार्धं राज्ञाऽऽह—

अज्ज वि सा परितप्पइ, कमलमुही अत्तणो पमाएण।

समस्येयम्। अथ प्रभुः स्माह—

[7]'पढमविबुद्धेण तए, जीसे पच्छाइयं अंगं ॥ १ ॥'[8]

राजा आमस्तदाश्चमत्कृतः।

अन्यदा प्रिया पदे पदे मन्दं मन्दं सञ्चरन्तीं दृष्ट्वा गाथार्धं राजा जगाद

१ क–हस्तशत०'। २ ग–बुधा'। ३ घ 'सर्वध्या। ४ क ख ५ क ख–' हस्वाया भवतु'। ६ पादकुलकम्। ७ क ख तदा'।
८ १ छाया—अद्यापि सा परितपति कमलमुखी आत्मनः प्रमादेन।
प्रथमविबुद्धेन त्वया यस्या प्रच्छादितमङ्गम् ॥ १०

[1]वाल्हा चक्कमंती पए पए कीस कुणइ मुहभंगं ? ।

सूरिराह—

नूणं [3]रमणपएसे मेहलया छिवइ नहपंति ॥ १ ॥[4]

इदं श्रुत्वा राजा मुखं निश्वासहतदर्पणसमं दधे । अमी मदन्तः-
५ पुरे कृतविप्लवा इति धिया । तच्चाचार्यैः क्षणार्धेनावगतं चिन्तितं
च—अहो विद्यागुणोऽपि दोषतां गतः ।

जलधेरपि कल्लोला–श्चापलानि कपेरपि ।
शक्यन्ते यत्नतो रोद्धुं, न पुनः प्रभुचेतसः ॥ १ ॥[5]

रात्रौ सूरिः सङ्घमनापृच्छ्य राजद्वारकपाटसम्पुटतटे काव्यमेकं
१० लिखित्वा पुराद् बहिर्ययौ । तद्यथा—

यामः स्वस्ति तवास्तु रोहिणगिरे ! मत्तः स्थितिप्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १ ॥[6]

१५ अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्
किं वा विमुञ्चसि विभो ! यदि वा विमुञ्च ।
हा हन्त ! केकिवर ! हानिरियं तवैव
भूपालमूर्द्धनि पुनर्भविता स्थितिर्नः ॥ २ ॥[8]

दिनैः कतिपयैः 'गौड'देशान्तर्विहरन् 'लक्षणावती'नाम्न्याः[9] पुरो
२० बहिरारामे समवासार्षीत् ।

---

१-२ छाया—बाला चङ्क्रम्यन्ती पदे पदे कुतः कुरुते मुखभङ्गम् ? ।
नूनं रमणप्रदेशे मेखलया स्पृश्यते नखपङ्क्तिः ॥
३ हृदयभागे । ४ आर्या । ५ अनुष्टुप् । ६ शार्दूल० । ७ ग पुस्तके इदं पद्यमधिकं
विद्यते, एतदपि—
इ(ह)य जिहिं गय तिहिं गया सहिमंडणा हवंति ।
छेहु तोइ सरोवरइ ज हंसे मुचंति ॥ ३ ॥
परन्तु प्रक्षिप्तमिदमिति प्रतिभाति, उभयत्र तद्दर्शनात् । ८ वसन्त० । ९ ग 'नगर्याः'।

तत्र पुरे धर्मो नाम राजा। स च गुणज्ञः। तस्य सभायां वाक्पति-नामा कविराजोऽस्ति । तेन सूरीणामागमनं लोकादवगतम्। ज्ञापितश्च राज्ञः। राज्ञा प्रवेशमहः कारितः। पूर्मध्ये सौधोपान्ते गुरुस्तुङ्गगृहे स्थापितः। राजा नित्यं वन्दते। कलया जिह्वा रञ्जिताथ। प्रभावना प्रैधते स्म। यशश्च कुन्दशुभ्रम्। [1]राजा प्रोचे-- 　५

अदृष्टे दर्शनोत्कण्ठा, दृष्टे विरहभीरुता।

दृष्टेनाप्यदृष्टेन, भवता नाप्यते सुखम् ॥ १ ॥[2]

निर्बन्धे सूरिराह--आमश्चेत् स्वयमायास्यति तदा वयं यास्यामः, नान्यथा। इति प्रतिज्ञाय स्थापिताः पुण्यलाभं कुर्वन्ति।

इतश्च यदा बप्पभट्टिः कृतविहारः प्रातः श्रीआमपार्श्वे नाधा-　१०
तस्तदा तेन सर्वत्रावलोकितो न लब्धः। जातो विलक्षः। 'यामः स्वस्ति तवास्तु' इत्यादि काव्यानि दृष्टानि। अक्षराण्युपलक्षितानि। ध्रुवं मां मुक्त्वा क्वापि गत एवेति निर्णीतम्।

अन्यदा बहिर्गतेन राज्ञा महाभुजङ्गमो दृष्टः। तं मुखे धृत्वा वाससाऽऽच्छाद्य सौधं गतः। कविवृन्दाय समस्यामर्पितवान्--　१५

शस्त्रं शास्त्रं कृषिर्विद्या, अन्यो यो येन जीवति।

इति। पूरिता सर्वैरपि। न तु नृपश्चमच्चकार हृदयाभिप्रायाकथनात्। तदा बप्पभट्टिं बाढं स्मृतवान्। सा हृदयसंवादिनी गोष्ठ्यत्रैव। अथ स पटहमवीवदत्। तत्रेदमघुषत्--यो मम हृद्गतां समस्यां पूरयति तस्मै [4]हैमटङ्कलक्षं ददामि। तदा 'गोपगिरि'यो द्यूतकारः　२०
कश्चिद् 'गौड'देशं गतः। स बप्पभट्टिसूरीणामग्रे तत् समस्यापदद्वयं कथितवान्। सूरिणा पश्चार्द्धं पेठे--

सुगृहीतं च कर्तव्यं, कृष्णसर्पमुखं यथा ॥२॥[5]

इति। स हि भगवान् [6]षड्विकृतित्यागी सिद्धसारस्वतो गगन-गमनशक्त्या विविधतीर्थवन्दनशक्तियुक्तस्तस्य कियदेतत्?। स द्यूत-　२५

१ ग-पुस्तके 'राजा० कुर्वन्ति' एतदधिकम्। २ अनुष्टुप्। ३ ख--'काव्यं दृष्टम्'। ४ ग-'हेम०'। ५ अनुष्टुप्। ६ दुग्ध-घृत दधि-तैल-गुड-पक्वान्नेति षड् विकृतयः।

कारस्तत्पादद्वयं 'गोपगिरौ' श्रीआमाग्रे निवेदितवान् । राजा दध्यौ—अहो सुघटितत्वमर्थस्य ! । तं पप्रच्छ—केन कथं पूरिता समस्या [२] । द्यूतकृदाह—'लक्षणावत्या बप्पभट्टिसूरिणा ज्ञानपू(भू)रिणा तस्योचितं दानं चक्रे ।

५ अन्यदा राजा नगर्या बहिर्ययौ । न्यग्रोधद्रुमाधः पान्थं मृतं ददर्श । शाखाया लम्बमानं करपत्रकमेकं निपुणं व्यूढं स्रवन्तं गाथार्द्धं च विशिष्टप्राण्णि लिखितं कठिन्या (खटिन्या[?]) अपश्यत् ।

तइया मह निग्गमणे पियाइ थोरंसुएहिं जं रुण्णं ।

तदपि समस्यापादद्वयं राज्ञा कविभ्यः कथितम् । न केनापि सुष्ठु

१० पूरितम् । राजा चिन्तयति स्म—

वेश्यानामिव विद्याना, मुखं कैः कैर्न चुम्बितम् [३] ।
हृदयग्राहिणस्तासां, द्वित्राः सन्ति न सन्ति वा ॥१॥[४]

हृदयग्राही स एव मम मित्रं सूरिवरः । स एव दौरोदरिको नृपेणोपसूरि प्रैषि । सूरिणाऽक्षिनिमेषमात्रेण पूरिता समस्या—

१५ करय(प?)त्तयबिंदुअग्निवडणेण तं मज्झ संभरियं ॥ १ ॥[६]

ततः पुनर्द्यूतकाराच्छ्रुत्वा राज्ञा हृष्टेनोत्कण्ठितेन सूरेराह्वानाय धार्मिकाः सचिवाः प्रस्थापिताः । उपालम्भसहिता विज्ञप्तिश्च ददे । प्राप्तास्ते तत्र । दृष्टास्तैस्तत्र सूरयः । उपलक्ष्य वन्दिताः । राजविज्ञप्तिर्दत्ता । तत्र लिखितं वाचितं गुरुभिः—

२० न गङ्गा गाङ्गेयं सुयुवतिकपोलस्थलगतं
न वा शुक्तिं मुक्तामणिरुरसिजस्पर्शरसिकः ।
न कोटीरारूढः स्मरति च सवित्रीं मणिचय-
स्ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥१॥[७]

---

१ ख-ग 'क(का)टि'वान् ।
२ छाया—तदा मम निर्गमने प्रियया स्थो(स्थू)राश्रुभिर्यद् रुदितम् ।
३ ग स्ववा । ४ अनुष्टुप् ।
५ छाया—करपत्रकबिन्दुकनिपतनेन तत् मया स्मृतम् । ६ आर्या । ७ शिखरिणी ।

छायाकारणि सिरि धरिय पंचवि भूमि पडंति ।
पत्तहं इहु पत्तत्तणउ तरुअर काइं करंति[2] ॥ २ ॥[1]

सचिवा अप्यूचुः—स्वामिन्! आमराजो निर्व्याजप्रीतिनिघ्न(ज्ञ[3])-प्रपन्ने(नि[4])— गोत्रमागयाऽयं देशो वसन्तावनमिवोद्यानलीला लम्भनीयः । भवद्वाग्रसलुब्धानामस्माकमितरकविगिर् न रोचते । ५

कथासु ये लब्धरसाः कवीनां
ते नानुरज्यन्ति कथान्तरेषु ।
न ग्रन्थिपर्णप्रणयाश्चरन्ति
कस्तूरिकागन्धमृगास्तृणेषु ॥१॥[9]

तदाकर्ण्य लेखं दत्त्वा सूरिभिः सचिवाः प्रोचिरे—श्रीआमो गोपतिः १० समक्षं एवं भाषणीयः —

अस्माभिर्यदि वः कार्यं, तदा धर्मस्य भूपतेः ।
सभायां छन्नमागम्य, स्वयमापृच्छयतां द्रुतम् ॥२॥[10]

अस्माकमिति हि प्रतिज्ञाऽऽस्ते धर्मेण राज्ञा सह—स्वयमाम सोऽस्य त्वत्समक्षं यदाऽस्मानाकारयति किल तदा तत्र याम, नान्य- १५ थेति । प्रतिज्ञाभङ्गोऽप्यत्र नोचितः सत्यवादिनां प्रतिष्ठितानाम् । ततो मन्त्रिण उप'कान्यकुब्जं' समाजग्मुः । सूरीणामुक्तमुक्त्वा लेखश्चादर्शि[11] । तत्र लिखितं यथा—

“विंझेण विणा वि गया, नरिंदभवणेसु हुंति गारविया ।
विंझो न होइ वंझो, गएहिं बहुएहिं वि गएहिं ॥१॥”[12][13] २०

---

1 छाया—छायाकारणाच्छिरसि धृत्वा पञ्चापि भूमौ पतन्ति ।
पत्राणामेतत् पात्रत्व (पत्रत्व) तरुवराः किं कुर्वन्ति ? ॥
2 ग 'कारि' । 3 ग 'पच्चिवि' । 4 ग 'पहुपत्त०' । 5 एतच्छब्दोनाम न ज्ञायते ।
6 ख 'भवद्वाक्यरस०' । 7 घ—निर्भेद्यमुद्गमोद्ग(?)पर्ण० । 8 क-ख 'ग्रथि०' ।
9 उपजाति । 10 अनुष्टुप् । 11 ख-ग—'दर्शिता तद्युक्त०' ।
12 छाया—विन्ध्येन विनाऽपि गजा नरेन्द्रभवनेषु भवन्ति गौरविताः ।
विन्ध्यो न भवति वन्ध्यो गजैर्बहुकैरपि गतैः ॥
13 अतः परं दशमपर्यन्तानां पद्यानां छन्द आर्या ।

माणसरहिएहिं सुहाइं जह न लब्भंति रायहंसेहिं ।
तह तस्स वि तेहिं विणा, [3]तीरुच्छंगा न सोहंति ॥२॥
[4]परिसेसियहंसउलं, पि माणसं माणसं न संदेहो ।
अन्नत्थ वि जत्थ गया, हंसा वि बया न मन्नंति ॥३॥
५ हंसा जेहिं गया तहिं, [5]गया महीमंडणा हवंति ।
छेहउ ताहं महासर–हं जे हंसेहिं मुच्चंति ॥४॥
[7]मलओ सचंदणु चिय, नइमुहहीरंतचंदणदुमोहो ।
पब्भट्ठ पि हु मलया–उ चंदणं जायइ महग्घं ॥५॥
[8]अग्घायंति महुयरा, विमुक्ककमलायरा वि मयरंद ।
१० कमलायरो वि दिट्ठो, सुओ वि किं महुयरविहूणो ? ॥६॥
[10]इक्केण [11]कुत्थुहेण, विणा वि रयणायरु चिय समुद्दो ।
कुत्थुहरयण पि उरे जस्स ठिय सो वि हु महग्घो ॥७॥

---

१ छाया—मानसरहितै सुखानि यथा न लभ्यन्ते राजहंसैः ।
तथा तस्यापि तेन विना तीरोत्सङ्गा न शोभन्ते ॥
२ ख—'माणसरएहिएहिं' । ३ घ—'तिरु०' ।
४ छाया— परिशेषितहंसकुलमपि मानसं मानसं न सन्देहः ।
अन्यत्रापि यत्र (कुत्र) गता हंसा अपि बका न मन्यन्ते ॥
हंसा यत्र गतास्तत्र गता महीमण्डना भवन्ति ।
विरहस्तेषां महासरसां यानि हंसैर्मुच्यन्ते ॥
५ ख—'जय' । ६ ग—'जिगय(?) महिमडणा' ।
७-८ छाया—मलयः सचन्दन एव नदीमुखह्रियमाणचन्दनद्रुमौघः ।
प्रभ्रष्टमपि खलु मलयात् चन्दनं जायते महार्घम् ॥
आजिघ्रन्ति मधुकरा विमुक्तकमलाकरा अपि मकरन्दम् ।
कमलाकरोऽपि दृष्टः श्रुतोऽपि किं मधुकरविहीनः ? ॥
९ घ-'मुहुयरा०', ग–'महुयश(?)' ।
१० छाया—एकेन कौस्तुभेन विनाऽपि रत्नाकर एव समुद्रः ।
कौस्तुभरत्नमप्युरसि यस्य स्थितं सोऽपि खलु महार्घः ॥
११ ग-'कत्थु०' ।

पंइ मुक्काण वि तरुवर[1] फिट्टइ पत्तत्तण न पत्ताण ।
तुह पुणच्छाया जइ होइ कहवि ता तेहिं पत्तेहिं ॥८॥
जे केवि पहू महिमण्डलंमि ते उच्छुदण्डसारिच्छा ।
सरसा जडाण मज्झे विरसा पत्तेसु दीसंति ॥९॥
सपइ पहुणो पहुणो पहुत्तण किं चिरत्तणपहूण[2] । ५
दोसगुणा गुणदोसा एहिं कया न हु कया तेहिं ॥१०॥

एतद् श्रावयित्वा सोऽवन्ठ नृप सारकतिपयपुरुषवृत्तोऽचालीत्। 'गोदावरी'तीरग्राममेकमगमत् । तत्र खण्डदेवकुले वासमकार्षीत् । देवकुलाधिष्ठात्री व्यन्तरी सौभाग्यमोहिता गङ्गेव भरतं त भेजे । प्रभाते करभमारुह्य ता देवीमापृच्छ्य प्रभुपादान्त प्राप । गाथार्धं १० पपाठ—

[3]अज्ज वि सा सुमरिज्जइ, को नेहो एगराईए[?] ।

सूरीन्द्र प्राह—

[4]'गोदा'नईइ तीरे, सुन्नउले जंसि वीसमिओ ॥ १ ॥[5]

इति । अन्योन्य गाढमालिलिङ्गतुरुभौ । तत आम आह स्म— १५
अद्य मे सफला प्रीति–रद्य मे सफला रति ।
अद्य मे सफल जन्म, अद्य मे सफल कुलम्[6] ॥ १ ॥[7]

रात्रौ इष्टा गोष्ठी च ववृते मधुमधुरा । तत प्रभाते सूरिर्धर्म-नृपास्थानमगमत् । आमनृपोऽपि प्रधानै स्वै पुरुषै सह

---

१छाया—त्वय मुक्तानामपि तरुवर ! भ्रश्यति पत्रत्व (पात्रत्व) न पत्राणाम् ।
तव पुनश्छाया यदि भवति कथमपि तर्हि तै पत्रै ! ॥
ये केऽपि प्रभवो महीमण्डले त इक्षुदण्डसदृशा ।
सरसा जडाना (जडानां) मध्ये विरसा पत्रेषु (पात्रेषु) दृश्य न्ते ।
सम्प्रति प्रभव प्रभव प्रभु त्व किं चिर त्वप्रभूणाम्? ।
दोषगुणा गुणदोषा एभि कृता न खलु कृतास्तै ॥ २ख 'चरत्तपहू॰'
३ छाया अद्यापि सा स्मर्यते क स्नेह एकरात्र्या ? ।
गोद (वरी) नद्यास्तीर शू न्य(देव)कुले यदसि विश्रमित ॥
४ ग-'गोदानईय॰' । ५आया । ६ क ख– फलम् । ७ अनुष्टुप् ।

स्थगीधरो भूत्वाऽऽगच्छत् । आम आवउ इति ब्रुवाणे सूरिभि- र्धर्माय आमस्य विशिष्टपुरुषा दर्शिता । एते आमनृपनरा विज्ञानाद्वातुमायाता इति । धर्मेण राज्ञा पृष्ट विशिष्टजनपार्श्वे– भो आमप्रधाननरा ! स भवता स्वामी कीदृशस्ते ? । तैर्निगदितम्– ५ यादृगय स्थगीधरस्तादृगास्ति । प्रथम मातुलिङ्ग करे धारयित्वा आम आनीतोऽस्ति । सूरिभि पृष्टम्— भो स्थगीधर ! तव करे किमेतत् ? । स्थगीधरीभूतेन श्रीआमेनोक्तम् —बीजउरा इति । क्षणार्धेन वार्त्तामध्ये सूरिभि सूक्ष्ममवतारितम्—

तत्तीसायरी मेलावा केहा धण उत्तावली पिउ मदसणेह्ना ।
१० निरहि माणुसु जो मरइ तसु वंकण निहोरा कन्निपवित्तडी जणु जाणइ दोरा ॥ १ ॥

इति । गुरुणा कथितम्—आम आवउ, आम आवउ । धर्मेण राज्ञा तुंअरिटोट दृष्ट्वा पृष्टम्— अहो स्थगीधर ! किमिदम् ? । तेनोक्तम्— तु अरि, तवारीत्यर्थ । इत्यादि गोष्ठ्या वर्तमानाया
१५ शनै शनै श्रीआमराजश्चिद्रूपो मेत्रापकान्निसृत्य पुराद् बहि स्थाने स्थाने स्थापितैर्नीहन्त कियतीमपि भूमिमत्यक्रामत् । तावता सुगीधरो निम्भाय प्रहरद्वय यामपि कथामचीकथत् । रसान्तरात स थोऽपि जातो यो रम्भा तिलोत्तमाप्रेक्षणीयकेऽपि

१ अनागम्यताम् पा तर आम ' आगम्यताम् । २ क 'आमनृपनरा ' ।
३ घ- 'करण । ४ बीजपूरकम् पक्षा तरे द्वितीयो राजा ।
५ एत पद्यस्य अक्षावर छातपर्यां स्थ स्यात् श्रीबप्पभट्टिसूरिभि , पर त्वधुना तु धर्मिमायकचरित्रे प्रदर्शितमर्थचतुष्टयमत्रोपलभ्यत ज्ञायत च ।
६ घ 'ह धणउत्तार[णो] ती प्रियमद० । ७ ग- घणि उतावली' । ८ ग-'विरह मे, मणुसु मरइ', घ-'विरह माणुसु जइ मरइ तणु । ९ग- वकणु नहोरा कर्णपवि०,' घ- 'करणु निहोरा क्रिमपवि०' । १० 'इति द्वयारभ्य तवारीत्यर्थ ' इति पर्यन्तमधिक दृश्यत ग पुस्तके । ११ तुअरिरोपम् । १२ ग राजश्चिद्रुपमेलापक०' । १३ ग 'भर व(?) अत्यक्रामत्', घ-'भुव अतिक्रामत्' ।

दुर्लभः। आमो राजाऽमूल्यं कङ्कणं ग्रहणके मुक्त्वा वेश्यागृहे उषित आसीत्। सा तु 'लक्षणावती'पतेश्चारस्त्री। एकं कङ्कणं आमो राजद्वारे मुञ्चन्नगात्। अपराह्णे राज्ञः पार्श्वाद् बप्पभट्टि-सूरिभिर्मुत्कलापितम्— देव! 'गोपगिरौ' आमपार्श्वं याम, अनुज्ञा दीयताम्। धर्मेण भणितम्—भवतामपि वाणी विघटते? ५ भवद्भिर्भणितमभूत्—यदा तव दृष्टो आमः समेत्यास्मानाह्वयति तदा याम, नार्वाक्, तत् किं विस्मृतम्? जिह्वे किं वो द्वे स्तः ?। आचार्या जगदुः—श्रीधर्मदेव! मम प्रतिज्ञा पूर्णा। राजाऽऽह —कथम्?। सूरिर्वदति— 'आमराजोऽत्र स्वयमागतस्तव दृष्टो'। राजाऽऽह—कथं ज्ञायते?। सूरिः—यदा भवद्भिः १० पृष्टं भवतां स्वामी कीदृशः विशिष्टैस्तदा भणितम्—स्थगिका-धररूप, तथा, 'बीजउरा' शब्दोऽपि विमृश्यताम्। 'दोरा'-शब्दोऽपि यो मयोक्तोऽभूत्। तस्मात् प्रतिज्ञा पूर्णा मे। अत्रान्तरे केनापि राजद्वाराद् आमकङ्कणं धर्मनृपहस्ते दत्तं आमनामाङ्कितम्। द्वितीयं वेश्यया दत्तम्। तद् दृष्ट्वा नष्टसर्वस- १५ स्तद्वन् इव धर्मः शुशोच— धिग् मां यन्मया शत्रुः स्वगृहमायातो नार्चित, न च साधित। धर्मेण मुत्कलिता सूरयः पुरं क्वापि स्थितेनामेन सह जग्मुः। मार्गे गच्छता आमेन पुलिन्द एको जलाशयमध्ये जलं उगवन्मुखेन पिबन् दृष्टः। आमराजेन सूरीणामग्रे प्रत्योक्तम्— २०

[4]पहु नैम पुलिंदउ पउ पिवइ [5]पयिअ कवणिण कारणिण।

सूरिभिरभाणि—

[6]कर बे वि नरविय कज्जलिणमुद्दहअसुनिवारणिण ॥१॥

---

१ ग 'आमो राजाऽत्र'। २ 'दोराशब्दोऽपि विमृश्यताम्' इत्यधिक ख-पाठः। ३ ग-'नृपधर्महस्ते'।

४ छाया—प्रभुरेव पुलिन्द पय पिबति पथिक केनापि कारणेन। ५ ग-'पयिड'।

६ छाया— करौ द्वावपि कामिनी कज्जलेन उद्वहदश्रुनिवारणतः।

राज्ञा प्रार्थयापि स समाकार्य पृष्ट । तेनोक्तम्—सत्यं सूरिवच । हस्तौ दर्शितौ । राजा तेन वाक्संवादेन प्रीत । 'अज्ज वि सा परितप्पइ' इत्यादि तदुक्तं सर्वं सारस्वतविलासितमिति निरणैषीत् । शीघ्रशीघ्रं 'गोपालगिरिं' गत । पताकातोरणमञ्चप्रतिमञ्चादिमहा-
५ स्तत्राभूत् । दिवसा यत्स्यप्यतिक्रान्ता । तत श्रीसिद्धसेनसूरयो वार्धकेन पीडिता अनशनं ग्रहीतुकामा श्रीबप्पभट्टिसूरीणामा-कारणाय गीतार्थमुनियुगलं प्रैषिषु[1] । ते तद् गुरोर्लेखमदीदृशन् । तत्र लिखितं यथा—

[2]अध्यापितोऽसि पदवीमधिरोपितोऽसि
१०　तत् किञ्चनापि कुरु वत्सक! बप्पभट्टे! ।
प्रायोपवेशनरथे विनिवेश्य येन
सम्प्रेषयस्यमरधाम निनान्तमस्मान् ॥१॥[3]

तद् दृष्ट्वा आमभूपतिमापृच्छ्य 'मोढेरक'पुर ब्रह्मशान्तिस्था-पितवीरजिनमहोत्सवाढ्य प्रापुस्ते । गुरून् ववन्दिरे । गुरवोऽपि
१५ तान् बाढमालिङ्गयालापिषु । वत्स[4] गाढमुत्कण्ठितमस्माकं हृदयम् । मुखकमलकमपि ते निरमृतम् । राजानुगमनं तेऽस्माकं दुःखाया-सीत् । कारय साधनाम् । अनृणो भव । ततोऽन्त्याराधना-चतु-शरणगमन-दुष्कृतगर्हा सुकृतानुमोदन तीर्थमालावन्दनादिका विधि-ना विधापिता । गुरवो देवलोकललनानयनविभागपात्रत्व-
२० मानञ्चु । शोक उच्छलित । ततो बप्पभट्टि श्रीमद्गोविन्द-सूरये श्रीनन्नसूरये च गच्छभार समर्प्य श्रीआमपार्श्वमागत । पूर्ववत् समस्यादिगोष्ठ्यः स्फुरन्ति ।

एकदा सूरिर्नृपसभायां चिरं पुस्तकाक्षरदत्तदृक् तस्थौ । तत्रैका नर्तकी नृत्यन्ती आसीद् रूपदासीकृताप्सरा । सूरिर्दृग्नोच्छिनि-
२५ वारणाय तस्या शुकपिच्छनीलवर्णायां नीलकञ्चुलिकायां दश

१ ख 'प्रैषिषु' । २ क—'अध्यापिताऽपि' । ३ नास्त० । ४ ग 'आगमन' ।

निवेशयामास । आमस्तद् दृष्ट्वा मनसि पपाठ—

'सिद्धंततत्तपारं-गयाण जोगीण जोगजुत्ताणं ।
जइ ताणं पि मयच्छी, मणंमि ता तच्चिय पमाणं ॥१॥'[3]

आमो रात्रौ पुंवेषां तां नर्तकीं सूरिवसतौ प्रैषीत् । तया सूरीणां विश्रामणाऽऽरब्धा । करस्पर्शेन ज्ञाता युवतिः सूरिणाऽभिहिता सा—का त्वम् ? । कस्मादिहागता ? । अस्माकु महाव्रतनिर्विण्णेषु वराकि ! भवत्याः कोऽवकाशः ? । वात्याभिर्न चलति काञ्चनाचलः । तयोक्तम्—भवद्भ्य उपदेष्टुमागता—

राज्ये सारं वसुधा, वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे, वराङ्गनाऽनङ्गसर्वस्वम् ॥१॥[4][5] १०

इति । किञ्च—

प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः ? ।
प्राप्यते येन निर्वाणं, सरागेणापि चेतसा ॥२॥[6]

श्रीआमेन प्रेषिताऽहं प्राणवल्लभा भवतां शुश्रूषार्थम् । ततः सूरिशक्रो वदति स्म— अस्माकं ज्ञानदृक्प्रपातदृष्टदृश्यानां नैव १५ व्यामोहाय प्रगल्भसे ।

मलमूत्रादिपात्रेषु, गात्रेषु मृगचक्षुषाम् ।
रतिं करोति को नाम, सुधीर्वर्चोगृहेष्विव? ॥१॥[7]

साऽपि निर्विकारं सूरिवरं निश्चित्य धनच्चेताः प्रातर्नृपतिसमीपं गता । पृष्टेन राज्ञे रात्रीयः सूरिवृत्तान्तः सम्यक् कथित- २० स्तया— पाषाणघटित इव तव गुरुः; नवनीतपिण्डमयः शेषो लोकः । यावन्तः कूटप्रपञ्चा हावभाव-कटाक्ष-भुजाक्षेप-चुम्बन-

---

१ ग-'स्तथा' ।
२ छाया— सिद्धान्ततत्त्वपारङ्गतानां योगिनां योगयुक्तानाम् ।
यदि तेषामपि मृगाक्षी मनसि तर्हि तदेव प्रमाणम् ॥
३ आर्या । ४ ख-'वराङ्गनानां सर्व॰' । ५ आर्या । ६-७ अनुष्टुप् । ८ क-ख-'वराके' ।

[1]नख-दन्तक्षतादिविलासास्ते सर्वे आजन्मशिक्षितास्तत्र प्रयुक्ताः । पुनस्तिलतुषत्रिभागमात्रमपि मनोऽस्य नाचालीत्। अनुराग-बलात्कार-पूत्कार-भीदर्शन-हत्यादानादिविभीषिकाभिरपि नाक्षुभत् । तदेष मन्ये महाब्रजमयो न देवकन्याभिर्न विद्याधरीभिर्न नागाङ्गनाभि-
५ श्चाल्यते; मानुषीणां तु का कथा [2] । अस्मिन् सूरेर्धर्मस्थैर्ये श्रुते नृपो विस्मयानन्दाभ्यां कन्दम्बमुकुलस्थूलरोमाञ्चकञ्चुकितगात्रः सवृत्तः । दध्यौ च गुरुं ध्यानप्रत्यक्षं कृत्वा—

न्युञ्छने यामि भक्त्याना, दृशोर्याम्यवतारणे ।
बलिं क्रियेऽहं सौहार्द-हृद्याय हृदयाय ते ॥१॥[3]

१० प्रातर्गुरवः समागुः । राजा [4]ह्रीणो न वदति किञ्चित् । सूरिभि-र्भणितम्—राजन्! मा लज्जिष्ठाः; महर्षीणां दूषणभूषणान्वेषणं राज्ञां कार्यम्, न दोषः । राज्ञोक्तम्— अलमतीतवृत्तान्तचर्चया । एतदह-मुत्तम्भितभुजो ब्रुवे युष्मान् ब्रह्मधनानवलोक्य—

धन्यास्त एव धवला[5]यतलोचनानां
१५ तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम् ॥ १ ॥[6]

इत्युक्त्वा दण्डप्रणामेन प्रणनाम श्रीआमः ।

अन्येद्युः राजा राजपथेन संञ्चरमाणो[7] हालिकप्रिया एरण्डवृक्षपत्र-
२० सवृतस्तनविस्तरा एरण्डपत्राणि विचिन्वाना गृहपाश्चात्यभागे दृष्टा गाथार्द्धं योजितवान्—

[8]घ(त्त ?)इ वि वरनिग्गयदलो एरंडो सोहइ व्व तरुणाणं ।

---

१ ग-'नखरदन्ताक्षता॰' । २ क-'क्रियेऽहं' । ३ अनुष्टुप् । ४ ग-'ह्रीणो' ।
५ क-'धवलायत॰' । ६ वसन्त॰ । ७ ग-'सञ्चरमाणो' ।
८ छाया— सर्वापि वरनिर्गतदल एरण्डः शोभत एव तरुणानाम् ।

तत् तु सूरीणां पुरः समस्यात्वेन समर्पितवान् । सूरय ऊचुः—

'इय धेरे हत्थियबहू इदहमित्तथणी वसइ ॥ १ ॥'

राजा विस्मितः । अहो सारः सारस्वतम् ! ।

अन्यदा सायं प्रोषितभर्तृका वासभवनं यान्ती वक्रग्रीवा दीपकरा ददर्श । गाथार्द्धं चोच्चैः सूर्यग्रे पपाठ— ५

'दिज्जइ वंकग्गीवा—ट दीवओ पहियजायाए ।

सूरिर्गाथापूर्वार्द्धमुवाच—

'पियसमरणपल्हुइ—तअंसुधारानिवायभीयाए ॥ २ ॥'

इति । सूरि-भूपौ सुखेन कालं गमयतो धर्मपरौ ।

अन्यदा धर्मनृपेण आमनृपस्य पार्श्वे दूतः प्रहितः । एषा १० बोचत्—राजन्! तव विचक्षणतया धर्मनृपः सन्तुष्टः । पुनः आह— भवद्भिर्वयं छलिताः । यतो भवद्भ्यो गृहमागतेभ्यो नास्माभिर्महानल्पोऽपि कोऽपि सत्कारः कृतः । अधुना शृणु— अस्मद्राज्ये वर्धनकुञ्जरो नाम महावादी बौद्धदर्शनी विदेशादागतोऽस्ति । स वाद जिघृक्षु । म कोऽपि वो राज्ये वादी भवति १५ स आनीयताम् । अस्माकं भवद्भिः सह चिरन्तनं वैरम् । यः कोऽपि वादी विजयी भविष्यति तत्प्रभुरपरस्य राज्यं ग्रहीष्यति । मम वादिना यदा जितं तदा त्वदीयं राज्यं मया ग्राह्यम् । यदा तव वादिना जितं तदा मदीयं राज्यं त्वया ग्राह्यम् । अयं पणः । वाग्युद्धमेवास्तु । किं मानवक्षयेण ? । आमेनोक्तम्—दूत ! २० त्वया यदुक्तं तद् धर्मेण कथापितमथवा त्वया स्वतुण्डकण्डूतिमात्रे-

---

१ छाया—अत्र गृहे हस्तिकवधूरेतावन्मात्रस्तना वसति ।

२ ग—'इदहमिइत्थी' । ३ ग-'अतिथि' । ४ आर्या । ५ ख-'भुवन' ।

६-७ छाया— दीयते वक्रग्रीवया दीपकः पथिकजायया ।

प्रियस्मरणप्रलुठदश्रुधारानिपातभीतया ॥ ८ आर्या ।

९ ख-'यदि' ।

णोक्तम् [१]। यदि तव प्रभुः सप्ताङ्गं राज्यं वादे जिते समर्पयिष्यति मे इति सत्यं तदा वयं वादिनमादायागच्छाम। दूतेनोक्तम्—कारणवशाद् युधिष्ठिरेणापि 'द्रोण'पर्वण्यसत्यं भाषितम्; मत्प्रभुस्तु कारणेऽपि न मिथ्या भाषते। आमेन दूतः प्रैषि। उक्तदिनोपरि [२] च बप्पभट्टिं [३] गृहीत्वाऽर्द्धपथे उक्तस्थाने आमोऽगमत् [४]। धर्मभूपतिरपि वर्धनकुञ्जरं वादीन्द्रमादाय तत्राजगाम [५]। 'परमार'-[६]वंश्यं नरेन्द्रं महाकविं वाक्पतिनामानं स्वसेवकं सहादाय [७]समाययौ। उचितप्रदेशे आवासान् दापयामास। तौ वादि-प्रतिवादिनौ पक्षप्रतिपक्षपरिग्रहेण वादमारेभाते। सभ्याः कौतुकाक्षिप्ताः पश्यन्ति। द्वावप्यसामान्यप्रतिभौ। वादे षण्मासा गताः। द्वयोः कोऽपि न हारयति, न जयति। आमेन सूरयः प्रोक्ताः सायम्—राजकार्याणां प्रत्यूहः स्यात्, निर्जीयतामसौ शीघ्रम्। सूरिणा भणितम्—[८]प्रातर्निग्रहीष्यामि, मा स्म वो भ्रान्तिर्भूयात्। रात्रौ सूरीश्वरेण मन्त्रशक्त्या मण्डले हारार्द्धहारमणिकुण्डलमण्डिताङ्गी दिव्याङ्गरागवसना दिव्यकुसुमपरिमलवासितभुवनोदरा [९] भगवती भारती साक्षादानीता। चतुर्दशभिः काव्यैः सद्यस्कैर्दिव्यैः स्तुता। देव्योक्तम्—वत्स! केन कारणेन स्मृता? । सूरिधीरेण भणितम्—षण्मासा वादे लग्नाः, तथा कुरु यथा वादे निरुत्तरीभवति सः। देव्या गदितम्—वत्स! अहमनेन प्राक् सप्तभवान्याराधिता। मयाऽत्र भवेऽस्मै अक्षयवचना गुटिका दत्ताऽस्ति। तत्प्रभावाच्चक्रिनिधिधनमिव नास्य वचो हीयते। सूरिणोक्तम्—तर्हि देवि! किं जैनशासनविरोधिनी येन मे जयश्रियं न दत्से? । भारती ऊचे—वत्स! जयोपायं ब्रुवे, त्वया वादारम्भे प्रातः सर्वे वदनशौचं कारयितव्याः पार्षद्याः। गण्डूष

---

१ "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च" इत्यमरकोशे। २ ग-'गताश्च इति'। ३ क 'भट्टिं च'। ४ घ 'आमो [अन]गतः'। ५ घ 'तत्र जगाम'। ६ घ-'वंश'। ७ क ख-घ-समानि य। ८ घ 'प्रभाते नि०'। ९ घ 'सुरभितभुव०'।

कुर्वतस्तस्य वदनाद् गुटिका ममेच्छया पतिष्यति तदा त्वया जेष्यते, एकं तु याचे—मत्स्तुतेश्चतुर्दशकाव्य कस्याप्यग्रे न प्रकाश्यम् । तत्पठने हि मया ध्रुवं ध्रुवं प्रत्यक्षया भाव्यम् । कियता प्रत्यक्षा भवामि ? । क्लेशेनालम् । एवमुक्त्वा देवी विद्युज्झात्कारलीलयाऽन्तर्दधे । सूरिभिर्निशि परमाप्त शिष्य एको वाक्- ५ पतिराजसमीपं प्रहित्याख्यापितम्, यथा सूरयो वदन्ति—राजन् ! त्वं विद्यानिधिरस्माकं 'लक्षणावती'पुरीपरिचितचर । तदाऽऽगादी —भगवन् ! निरीहा भवन्त , का भवद्भ्यो भक्तिं दर्शयामि ? ।" तदा वयमवोचाम—अवसरे कामपि भक्तिं कारयिष्याम । भवद्भिर्भणितम्—तथाऽस्तु । इदानीं सोऽवसरोऽत्र १० समायात । वाक्पतिना शिष्य पृष्ट — सूरय किं मे समादिशन्ति ? आदिष्टं कुर्वे ध्रुवम् । शिष्यो न्यवेदयत्—राजन् ! गुरव आदिशन्ति—प्रातर्धर्माऽऽमयो सद स्थयो राजतेऽत्वया वाच्य यथा वदनशौच विना भारती न प्रसादति । तस्माद् वादिप्रतिवादिसभ्यसभेशा सर्वे शौचं कुर्वन्तु । एतावति कृते १५ भवता न सर्व स्नेह कृत एव । वाक्पतिना तदङ्गीकृतम् । शिष्येणोपगुरु गत्वा तत् तत्प्रतिज्ञात कथितम् । तुष्टा गुरव । प्रत्यूषे उदयति भगवति गभस्तिमालिनि लाक्षालिप्त इव प्राचीमुखे राजानौ समायामागाताम् । वाक्पतिना वदनशौच सर्वे कारिता , नौद्धवादीन्द्रोऽपि । तस्य वदनकमलाद् विगलिता गुटिका पतद्- २० ग्रहे । बप्पभट्टिशिष्यै पतद्ग्रहो जनैर्दूरे कारापित । गुटिका सूरिप्रसाजाता । बौद्धो गुटिकाहीन सूरिणा पार्थेन कर्ण इव दिव्यशक्तिमुक्तो नि शङ्कं वाक्पृषत्कैर्हत । निरुत्तरीकृत राहुग्रस्तश्चन्द्र इव हिमानीविलुप्तस्तरुखण्ड इव बाढं निस्तेजतां भेजे । तदा श्रीबप्पभट्टेर्निर्विवाद 'वादिकुञ्जरकेसरी'ति विरुद स्वे परैश्च २५

१ ग-'ध्रुव प्रत्यक्ष॰ । २ क-'रस्मान । ३ ग 'कारयिष्याम' । ४ ग-'आदिशतु । ५ घ 'सभ्येशा' । ६ सूर्ये ।

दत्तम् । धर्मेण सप्ताङ्ग राज्य आमाय दत्तम् । त्वाहीदम् ।
धर्माद्धि राज्यं लभ्यते । कात्र चर्चा[1] । आमेन गृहीतम् ।
तदा सूरिणा आमः प्रोक्त.——राजन्! पुना राज्य धर्माय देहि ।
महादानमिदम् ! शोभते च ते । राजस्थापनाचार्याश्च पारम्पर्येण
५ यूयम् । पूर्वं श्रीरामेण वनस्थेनापि सुग्रीव-विभीषणौ राजीकृतौ ।
त्वमप्येवं युगीनृपेषु तत्तुल्य । एतद्वचनसमकालमेव आमेन
गाम्भीर्यौदार्यधाम्ना धर्माय तद्राज्य मत्सर्प्य स धर्मः परिधापित. ।
स्ये मत्ताः करिण. शत, सहस्र तुङ्गास्तु रङ्गा., सहस्र सनरूपा
रैया , शतं वादिनाणि प्रादापयत । स्व स्व स्थान गता' सर्वे ।
१० सूरि-भूपौ यशोधवलितसप्तभुवनो 'गोपगिरौ' श्रीमहावीरमनन्दिषा-
ताम् । तदा सूरिकृत श्रीवीरस्य स्तवनम्— "शान्तो वेष.
शमसुखफला" इत्यादि काव्यैकादशकमयमद्यापि सङ्घे पठ्यते ।
सङ्घेन प्रभुर्ववन्दे । तुष्टुवे च—

रवेरेवोदयः श्लाघ्य योऽन्येषामुदयमह. [2] ।
१५ न तमासि न तेजासि, यस्मिन्नभ्युदिते सति ॥ १ ॥"

अन्यदा स्वपरसमयसूक्तैः प्रतोष्य राजा प्रभुभिर्मद्यमांसादि-
सप्तव्यसननियम कारित । सम्यक्त्वमूलैकादशव्रतनिरतश्च श्रावक.
कृत. । द्वादश व्रत त्रीणिविशतिभागरूप प्रथमचरमजिनरूपाणां
निषिद्ध सिद्धान्ते ।

---

१ ग. 'तुष्य.' । २ घ-'श्र- दि' । ३ घ- वशा' । ४ घ-"नभ्युदये
सति' । ५ अङ्गुर ।

६ " द्यूत मांस सुरा वेश्या, प चौर्यं परदारा तथा ।
पापर्द्धिरन चेति, महान् व्यसनानि हि ॥ ४ ॥"

इति श्रीसोमप्रभसूरिविरचिते शतार्थसनन्दनाममुख्ये ।
७ ख 'कर्दिन.' । ८ स्थूलप्र - तिपातविरमण स्थूल-मृषावादविरमण स्थूलादत्तादान
विरमण-स्वदारसन्तोषविरमण-दिग्व्रतविरमण भोगोपभोगविरमणाऽनर्थदण्ड-
विरमण सामायिक-देशावकाशिक पौषधैकादशव्रतम् ।

एकदा 'लक्षणावत्या' बौद्धो वर्धनकुञ्जरो धर्मनृपमाह सगद्गदम्— अहह बप्पभट्टिना जितस्तन्मे न दूषणम्। बप्पभट्टिर्हि भारती नररूपा, प्रज्ञामय पिण्डः, गोप्पुत्रः, न च दुनोति। एतत् तु दुनोति यत् तत्र भृत्येनापि वाक्पतिराजेन नृसिंहभेदात्मम मुखशौचोपायेन गुटीं हारयामहे। एतावदभिधाय स तारं तारं रुरोद। स निवारितः क्ष्मापेन रोदनात्। उक्तश्च—किं क्रियते ?। अथ नश्चिरसेवकोऽनेकसमराङ्गणलब्धजयप्रतिष्ठः प्रबन्धकविः परामर्षितुं न रोचते। क्षमस्वेदमस्माकं। ततो बौद्धो जोषं स्थितः। अपरेद्युर्यशोवर्मनाम्ना समीपदेशस्थेन बलवता भूपेन 'लक्षणावती'मेत्य रणे धर्मनृपो व्यापादितः। राज्यं जगृहे। वाक्पतिरपि बन्दीकृतः। तेन कारास्थेन 'गौडवध'-मङ्कं प्राकृतं महाकाव्यं रचयित्वा यशोवर्माय राजेन्द्राय दर्शितम्। तेन गुणविशेषविदा सचमत्कारं बन्देर्मुक्तः क्षामितश्च। "विद्वान् सर्वत्र पूज्यते"। ततो वाक्पतिर्बप्पभट्टेः समीपं गतः। द्वयोस्तयोर्मैत्री पूर्वमप्यासीत्, तदानीं विशेषतोऽवृधत्। तेन वाक्पतिना 'महामहविजया'ख्यं प्राकृतं महाकाव्यं बद्धम्। आमाय दर्शितम्। आमो हेमटङ्कलक्षमस्मै व्यशिश्रणत्।

कियती पञ्च सहस्री, कियती लक्षा च कोटिरपि[3]।
औदार्योन्नतमनसां, रत्नवती वसुमती कियती[4] ॥ १ ॥[5]

अपरेद्युः प्रभु श्रीआमेन पृष्टः — भगवन्! यूयं तावत् तपसा विद्यया च लोके लब्धपरमरेखाः। किमन्यः कोऽपि कथाप्यस्ते यो भवत्तुलालेशमवाप्नोति[2]। बप्पभट्टिरभाणीत्—अवनिपते[1]! मम गुरुभ्रातरौ गोविन्दाचार्य-नन्नसूरी सर्वगुणैर्मदधिकौ 'गूर्जर'-धरायां 'मोढेरक'पुरे स्तः। श्रुत्वोत्कण्ठ्याऽमितसैन्य आमस्तत्र गतः।

---

१ ख 'इतरेद्युः'। २ ग-'रहे'। ३ घ-'महमहविं०'। ४ न चेद मे दृष्टि-पथमगमत्। ५ आया।

तदा **नन्न**सूरिर्व्याख्यानेऽवसरायातान् **वात्स्यायनो**क्तान् कामाङ्ग-
भावान् पल्लवयन्नासीत् । राज्ञा श्रुतं तत् सर्वम् । अरुचिरुत्पन्ना ।
अहो वयं कामिनोऽपि नैतान् भावान् विद्मः, अयं तु वेत्ति सम्यक्,
तस्मादवश्यं नित्यं योषित्सङ्गी, किमस्य प्रणामेन ? । इत्यकृतन
५ तिरेवोत्थायाशु 'गोपगिरि'मागात् । चिराद् दृष्टः क्ष्माप इति रण-
रणकाक्रान्तस्वान्ताः प्रभवो वन्दापयितुमैषिषुः । राजा निरादरो न
वन्दते तथा । एवं दिनानि कतिपयानि गतानि ।

एकदा गुरुभिः पप्रच्छे– राजन्! यथा पुरा भक्तोऽभूस्तथेदानीं
भक्तो नासि । किमस्माकं दोषः कोऽपि ? । राजा स्माह–सूरिवर !
१० भवादृशा अपि कुपात्रश्लाघां कुर्वते, किमुच्यते ? । सूरिभिरूचे–
कथम् ? । **आमः** प्राह–यौ भवद्भिः पौ गुरुबान्धवौ स्तुतौ तत्र
गत्वा एको **नन्न**सूरिनामा दृष्टः शृङ्गारकथाव्याख्यानलम्पटस्तपो-
हीनो लोहतरण्डतुल्यो मज्जति मज्जयति च भवाम्बुधौ । तस्मान्न
किञ्चिदेतत् । सूरयो मसिमलिनवदनाः स्वबसतिमगुः । तत्रोप-
१५ निश्य द्वौ साधू 'मोढेरक'पुरं प्रहितौ । तत्पार्श्वात् तत्र कथापितम्–
आमोऽकृतप्रणामो भवत्पार्श्वादागतः । एवमेव युवां निन्दति ।
तत् कर्तव्यं येनासौ भवत्स्वन्येष्वपि श्रमणेषु अवज्ञावान् न भवति ।
सर्वं तत्रत्य ज्ञात्वा तौ द्वावपि गुटिकया वर्णस्वरपरावर्तं कृत्वा
नटवेषधरौ 'गोपगिरि'मीयतुः । श्रीवृषभध्वजचरित्रं नाटकत्वेन
२० ननन्धतुः । नटान् शिक्षयामासतुः । आमराजमवसरं ययाचतुः ।
राज्ञाऽवसरो दत्तः । मिलिताः सामाजिकाः तत्तद्रसभावज्ञाः ।
ताभ्यां नाटकं दर्शयितुमारेभे । भरतबाहुबलिसमरावसरोऽभि-
नीयते । यदा व्यूहरचना दारुणरणसारवीरवर्णना भटघोटा
हस्त्यश्वोत्पातनर्मगरिका क्षणक्षणत्कारादि ताभ्यां वर्णयितुमारब्धम्,
२५ धाराध्वस्य रसोऽवातारीत् तदा श्रीआमस्तङ्कटाक्ष 'कालिन्दा'-

१ ख– एवनिशमय॰' । २ ख– पप्रच्छ । ३ ख–'गुरुबन्धु' । ४ ख–'भवद्'।
५ १८ श्लोक म १२ श्लो ।     ६ ख– स्वबसत्यां र॰' । ७ ख–'दृष्ट्वात्मा॰' ।
८ ग भटघोटाकरि' ।

प्रवाहस्यामदीर्घनसौनाकृष्योत्थिता हत हत इति भाषते स्म ।
अत्रान्तरे नन्नसूरि-गोविन्दाचार्यौ स्वरूपमुद्रे प्रकाशयाहतुः —
राजन्! राजन्! भटा! भटा! शृणुत शृणुत कथायुधमिदम्, न तु
साक्षात्। अलं सम्भ्रमेण। इत्युक्त्वा लज्जिता विस्मिताश्च ते राजाद्याः
सद्भ्यस्याकारमदधुः। तदा गोविन्दाचार्य-नन्नसूरिभ्यां भूपोऽभाणि— ५
किल शृङ्गारानुभाविनो वयमिति न सम्यग् व्याख्यातुं विद्म, किन्तु
समराजिरमपि भवद्भ्याम्[3]निष्ठा स्म[4] कुरङ्गा इव गहने दृष्टेऽपि विभिम।
आयात्याद् गृहीतप्रना पापभीरव स्म, परं भारतीप्रसादप्रमत्त
वचनशक्त्या रसान् सर्वान् जीवद्रूपानिव दर्शयाम । राजन्!
'मोढेरके' वसतो वात्स्यायनमावां व्याख्यातारौ वयं नन्नसूरय १०
इमे च गोविन्दाचार्याः । भवता तदा मृषा विकल्पं समतानि ।
राजा सद्यो लज्जे। तौ सूरी क्षमयामास आनर्च्च बप्पभट्टिं च ।
तौ कतिचिद् दिनानि उपराज स्थित्वा बप्पभट्टेरनुज्ञया पुनः 'मोढेर'
पुरमगाताम्। गतः समयः कियानपि ।

अन्यदा गायनवृन्दमागतम्। तन्मध्ये आडिकरा [5]नालनीलो- १५
त्पललोचना मृगाङ्कमुखी किन्नरस्वरा विदुषी गायति । तां दृष्ट्वा
[6]मदनशरज्वरजर्जरो गलितविवेको गतप्रायशोचनः सर्वामिमिनि नेत्र 'कन्य
कुब्जेश पद्यद्वय प्रभुप्रत्यक्षमपाठीत्—

नक्तं पूर्णशशी सुधाधरदलं दन्ता मणिश्रेणयः
शान्ति श्रीगमनं गतं परिमलस्ते पारिजातद्रुमः । २०
वर्णी कामदुघा कटाक्षलहरी सा कालकूटच्छटा
तत् किं चन्द्रमुखि! त्वदर्थममरैरामथि दुग्धोदधिः[7] ॥१॥

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे शोभा वपुषि निहिता पङ्कशङ्का तनोति ।

---

१ घ–हनहनति'। २ ग–कथायुधमिद'। ३ क 'भविष्टा । ४ क–ख–'निष्टा'। ५ ख घ–'धनालनीलो०'। ६ ग 'मदन वर०'। ७ शार्दूल०।

विश्वप्रार्थ्यः सकलसुरभिद्रव्यदर्पापहारी
नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः ॥२॥

सूरिभिश्चिन्तितम्—अहो महतामपि कीदृग् मतिविपर्यासः ! ।

मज्जा काचन भूरिरन्ध्रविगलत्तत्तन्मलक्लेदिनी
५ सा सत्कारशतैः क्षणार्धमधुरा बाह्यामुपैति द्युतिम् ।
अन्तस्तत्त्वरसोर्मिधौतमतयोऽप्येता नु कान्ताधिया
क्लिश्यन्ति स्तुवते नमन्ति च पुरः कस्यात्र पूत्कुर्महे ? ॥३॥[1]

उत्थिता सभा । त्रिभिर्दिनैर्नृपेण पूर्बहिः सौधं कारितम्, मातङ्गी-सहितोऽत्र वत्स्यामीति धिया । तदवगतं श्रीबप्पभट्टिसूरिभिः ।
१० ध्यानप्रत्यक्षं हि तेषां जगद्वृत्तम् । ततो माऽसौ नरकं यासीदिति कृपया तैर्निष्पाद्यमानसौधभारपट्टे निशि खटिकया बोधदानि पद्यानि लिखितानि । यथा—

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भजन्त्यशुचयस्त्वत्सङ्गतोऽन्ये यतः ।
१५ किंचातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः ! कस्त्वां निरोद्धुं क्षमः ? ॥१॥[7]

सद्वृत्तसद्गुणमहार्हमहार्घकान्त—
कान्ताघनस्तनतटोचितचारुमूर्ते ! ।
आः पामरीकठिनकण्ठविलग्नमग्न !
२० हा हार ! हारितमहो भवता गुणित्वम् ॥२॥[8]

जीयं जलबिंदुसमं, संपत्तीओ तरंगलोलाओ ।
सुमिणयसमं च पिम्मं, जं जाणसि तं करिज्जासि ॥३॥[10]

---

१ ग–'कायाम्'। २ स्रग्धरा। ३ शार्दूल०। ४ ग–'बाससितम्'।
५ ग–'नारदमदा०'। ६ ग–'शिवाऽन्यः'। ७ शार्दूल०। ८ वसन्त०।
९ छाया—जीवितं जलबिन्दुसमं सम्पत्तयस्तरङ्गलोलाः ।
स्वप्नसमं च प्रेम यज्जानासि तत् कुर्याः । १० आर्या ।

देन्ति नइ जेण नणे, महुरि जइ निअकुलक्कमो जेण ।
कठट्ठिए वि नीर, त न कुलीणेहिं कायव्व ॥४॥[2]

प्रातरमूनि पद्यानि स्वयमामो ददर्श । वर्णान् कवित्वगतिं च उपलक्षयामास । अहो गुरूणा मयि कृपा ! । अहोतमा मम पापाभिमुखता इति लज्जे । दध्यौ च–साङ्कपिकमिद जैनधर्मीसङ्गमपाप मयाऽऽचरितम । मारितोऽह क्क यामि ? किं करोमि ? कथ गुरोर्मुख दर्शयामि ? किं तप समाचरामि ? किं तीर्थं सेवे ? । ऊर्ध्वमुख गृहीत्वा गच्छामि ? । कूपे पतामि ? । शस्त्रेणात्मान घातयामि ? । अथवा ज्ञातम्–सर्वजनसमक्ष पापशुद्ध्यर्थ काष्ठानि भक्षयामि । एव दैन्यवलायमानोऽनुचरानादिदेश– अग्नि प्रगुणयत । प्रगुणितस्तैरग्नि । समागता श्रीबप्पभट्टिसूरय । मेलित चातुर्वर्ण्यम् । उक्त तदवम् । यावत् सहसा कृशानु प्रवेक्ष्यति आमस्तावत् सूरिभिर्बाहौ धृत्वोक्त राजन्! शुद्धोऽसि । मा स्म खिद्यथा । त्वया हि सङ्कल्पमात्रेण तत् पाप कृत, न साक्षात्, सङ्कल्पेनाग्निमपि प्रविष्टोऽसि । चिर धर्म कुरु ।

मनसा मानस कर्म, वचसा वाचिक तथा ।
कायेन कायिक कर्म निस्तरन्ति मनीषिण ॥१॥[7]

इति वचनाद् विशुद्धोऽसि । जीवितो राजा । तुष्टो लोक । प्रीत सूरि ।

समयान्तरे वाक्पतिराजो 'मथुरा' ययौ । तत्र श्रीपादविदग्धो जज्ञे स । तल्लोकादवगम्य आम सूरीन् बभाषे– भवद्भिरहमपि श्रावक कृत । दिव्या वाणी व प्रसन्नैव । जानामि व शक्तिपरमरेखा यदि वाक्पतिमप्याहर्ततदीक्षा ग्राहयथ । आचार्येन्द्रै

---

१ छाया—ददन्ति यत्र जन मलिनी क्रियते निजकुलक्रमो यत्र ।
कण्ठस्थितेऽपि नीरे तत् न कुलीनैः कर्तव्यम् ॥   २ आर्या ।
३ ...। ४ ...त्वा इति भाषान्तरम् । ५ ग सहसाऽग्नि' । ६ अग्निम् ।
७ अनुष्टुप् । ८ ख– आचार्ये ।

साङ्ख्या निरीश्वरा केचित्, केचिदीश्वरदेवता ।
सर्वेषामपि तेषा स्यात्, तत्त्वाना पञ्चविंशति ॥१॥[1]

इति ज्ञात्वा भवदभिमतदेवाशिष. पठन्त स्म । यथारुचि हि श्रोतु पुरः पठनीय समयज्ञै । वाक्पतिराह– यद्यप्येव तथापि मुमुक्षवो वयमासन्ननिधन ज्ञात्वा इह परब्रह्म ध्यातुमायाता स्म । ५ बप्पभट्टयो जगदु – किं तर्हि रुद्रादयो मुक्तिदातारो न भवन्तीति मनुध्वे[?] । वाक्पति प्राह– एव सम्भाव्यते । बप्प भट्टयो बभाषिरे– तर्हि यो मुक्तिदानक्षमस्त शृणु । पठामि । स जिन एव ।

"मदेन मानेन मनोभवेन, क्रोधेन लोभेन ससम्मदेन । १०
पराजिताना प्रसभ सुराणा, वृथैव साम्राज्यरुजा परेषाम्"॥१॥[2]

[3]ज दिट्ठी करुणातरंगियपुडा एयस्स सोम मुह
आयारो पसमायरो परियरो सतो पसन्ना तणू ।
त मन्ने जरजम्ममच्चुहरणो देवाहिदेवो [4]जिणो
देवाण अवराण दीसइ जओ नेय सरूवं जए ॥२॥[5] १५

इत्यादि बहु पठे । वाक्पति प्राह– स जिन क्वास्ते[?] । सूरि – स्वरूपतो मुक्तौ, मूर्तितस्तु जिनायतने । वाक्पतिर्ब्रूते– प्रभो[!] दर्शय तम् । प्रभुरपि आमनरेन्द्रकारिते प्रासादे त निनाय । स्वय प्रतिष्ठितवर श्रीपार्श्वनाथमदीदृशत् । शान्त कान्त निरञ्जन रूप दृष्ट्वा प्रभुर्वो बैभाण– अय निरञ्जनो देव आकारेणैव लक्ष्यते । २० तदा बप्पभट्टिसूरिभिर्देवगुरुधर्मतत्त्वान्युक्तानि । राञ्चित सः । मिथ्यात्ववेषमुत्सृज्य जैन ऋषि श्वेताम्बरोऽभूत् । जिनमवन्दिष्ट अपाठीच्च—

---

१ अनुष्टुप् । २ कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिविरचितायामयोग व्यवच्छेदिकायां पञ्चविंशतिनम पद्यमिदम् । ३ उपजाति । ४ छायार्थिना प्रेक्ष्यता पञ्चाशत्तम पृष्ठम् । ५ ग घ– 'इणो । ६ शार्दूल० । ७ ख–'वभाषे' ।

मेयनाहिसुरहिए-ण इमिणा किंकरफल णलाडेण ।
इच्छामि अह जिणवर!, पणाम किंण कलुसिय काउ ? ॥१॥
[3]दो वि गिहि(ह)त्था धटहड वयइ, को किर कस्य विपत्त भणिज्जइ ?।
सारभो सारम पु-नइ, कद्दमु कद्दमण किम(म्) सुज्झ(ज्झ)इ ?॥२॥[4]
५ [5]अत्यासन्न आयुषि 'मथुरा'चातुर्वर्ण्यस्य आमनृपसचिवलोकस्य च प्रत्यक्ष अष्टादशपापस्थानानि त्याजित । नमस्कार पञ्चपरमेष्ठिमय श्रावित । जन्तेषु क्षामणां कारितो वाक्पति सुखन त्यक्ततनुर्दिवमगमत् । तत् सर्वं प्रधानैरन्यैरपि प्रथम ज्ञापितो नृप । पश्चाद् बप्पभट्टि'गोपगिरिं' गत । राजा तुष्टस्तुष्टुवे सूरिशक्रम्-
१० आलोकवन्त सन्त्येव, भूयासो भास्करादय ।
कलावानेव तु प्राव-द्रावकर्मणि कर्मठ ॥१॥[6]
एकदा राज्ञा सूरि पृष्ट — किं कारण येनाह ज्ञातजैनतत्त्वोऽपि अन्तराऽन्तरा तापसधर्मे रतिं बध्नामि ? । सूरिराह— प्रातर्वक्ष्याम । प्रातरायाता प्रोचु —राजन्! अस्माभिर्भारतीवचसा तव प्राग्भवो
१५ ज्ञात । त्व 'कालिञ्जर'गिरेस्तीरे शालनामा तपस्वी शालद्रुमाधोभागे द्वयुपवासात्तरितभोजनस्तपो बहूनि वर्षाण्यतपथा । स मृत्वा त्वमुत्पन्न । तस्यातिदीर्घा जटास्तत्रत्र लतान्तरिता अद्यापि सन्ति । तदाकर्ण्य आप्तनरास्तत्र राज्ञा प्रहिता । तैर्जटा आनीता । सूरिवाक्सत्यतादो दृष्ट । भूपति सूरीणां पदोर्निपत्य तस्थौ । पर-
२० मार्हतो बभूव ।

---

१ घ मयताए सुर॰' ग— मेयनाए'।
२ छाया— मृगनाभिसुरभितेनानन किङ्करफल ललाटेन ।
इच्छाम्यह जिनवर ! प्रणाम किं कलुषित कर्तुम् ? ॥
३ छाया—द्वावपि गृहस्थौ शीघ्र शीघ्र व्रजत क किल कस्य विपत्तिं भणेत् ? ।
सारम्भ सारम्भ पूजयति कर्दम कर्दमन किमु शुध्यति ? ॥
४ एतच्छन्द नाम न ज्ञायते ५ घ प्रत्यासन्न' । ६ ग भूप॰' ।
७ घ-ग- मणां । ८ अनुष्टुप् । ९ ग जन्मतत्र । १० ग अद्याप्यस्ति । ११ ग-'आनीता ।

अन्यदा सौधोपरितलस्थेन आमेन क्वापि गृहे भिक्षार्थं प्रविष्टो मुनिर्दृष्टः । तत्र युवतिरेका कामार्ता गृहागतं मुनिं परमद्वैकचित्त रिरमयिषुः कपाटसम्पुटं ददौ । मुनिर्नेच्छति ताम् । तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं 'काकतालीय' न्यायेन 'अन्धवर्तकी'न्यायाच्च । राजा तद् दृष्ट्वा सूरये ५ समस्यां ददौ—

कवाडमासज्ज वरंगणाए अब्भत्थिओ जुव्वणगव्वियाए ।

सूरिः प्राह—

[1] न मन्निय तेण जिइंदिएण सनेउरो पव्वइअस्स पाओ ॥१॥[2]

[3]अन्यदिने प्रोषितभर्तृकाया गृहे भिक्षुः कश्चिद् भिक्षार्थी प्र- १० विष्टः । राज्ञा सौधाग्रस्थेन दृष्टः । तया भिक्षोः पारणायाऽन्नमानीतम् । उपरि काकैर्भक्षितम् । मुनिकस्य दृष्टिस्तस्या नाभौ [4]स्थिता । तस्यास्तु दृष्टिस्तन्मुखकमले । आमः सूरये समस्यामार्पिपत् । यथा—

[5]भिक्खयरो पिच्छइ नाभिमंडलं सा वि तस्स मुहकमलं । १५

सूरिराह—

[6]दुण्ह वि चवालं चडुयं पि काया विलुपंति ॥२॥[7]

इति आमः श्रुत्वा चमत्कृतः । अहो सर्वज्ञपुत्रा एते [8] ।

अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वा उपभूपं गतः । बप्पभट्टिना श्लाघिता तत्कला । नृपात् तेन टङ्कलक्षं लेभे । २०

---

१ घ 'तम्' ।

२ छाया—कपाटमासाद्य वराङ्गनयाऽभ्यर्थितो यौवनगर्वितया ।

३ ग 'अन्मुथिओ' ।

४ छाया—न मतं तेन जितेन्द्रियेण सनूपुरः प्रव्रजितस्य पादः ॥

५ उपजाति । ६ ग 'अ यदा' । ७ ग–'पतिता' ।

८–९ छाया—भिक्षाचरः पश्यति नाभिमण्डलं साऽपि तस्य मुखकमलम् ।
द्वयोरपि कपालं चाटुकमपि काका विलुम्पन्ति ॥ १० आर्या ।

लेप्यमयबिम्बचतुष्टयं च कारितम्— एकं 'मथुरा'याम्, एकं 'मोढेरस्साहेव'या'मणहिल्लपुरे', एकं 'गोपगिरौ' एकं 'सतारका-क्ष'पुरे। तत्र तत्र प्रतिष्ठा प्रभावनार्थं कारिता। अन्यदपि बहुकारि।

५ अथ आमगृहे पुत्रो जातः सुलक्षणः। सोत्सवं तस्य दुन्दुक इति नाम प्रतिष्ठितम्। सोऽपि युवत्वे तैस्तैर्गुणैः पितृवत् पप्रथे। एकदा समुद्रसेनभूपाधिष्ठितं 'राजगिरि'नामदुर्गम् आमो रुरोध। अमितं सैन्यं कुद्दालादिसामग्री भैरवाद्यो यन्त्रभेदाः कल्पिताः। प्राकारोऽतिबलेन प्रपातयितुमारेभे। नापतत्।

१० आमः खिन्नः। तेन सूरयः पृष्टाः— अयमत्रत्यः प्राकारः कदाऽस्माभिर्ग्रहीष्यते ? । सूरिभिर्बभाषे— तव पुत्रपुत्रो भोज-नामाऽमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव। आम-स्तत्कालं प्राकाराद् बहिर्द्वादशगाव्यूतीमस्थात्। श्रुदकमारसाधकी। दुन्दुकगृहे पुत्रो जातः। तस्य 'भोज'नाम ददे। सद्यःजातमात्र

१५ पर्यङ्किकान्यस्तो दुर्गद्वाराग्रमानीतः प्रधानैः। तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो निशीर्णः। समुद्रसेनभूपो धर्मद्वारे निःसृतः। आमो 'राजगिरि'मविक्षत्। प्रजाभारो न कृतः। अक्रूरा हि जैना महर्षयः राजर्षयश्च दयापरास्ते। रात्रौ आभाप 'राजगिर्य'-धिष्ठात्रा भणितम्— राजन्! यदि त्वमत्र स्थास्यसि तदा तव लोकं

२० हनिष्यामि। आमः प्रत्यूचे— लोकेन हतेन किं ते फलम्? । यदि हनिष्यसि तदा मामेव घातय। एतन्निर्भयमामवचः श्रुत्वा तुष्टो व्यन्तर उवाच— प्रीतोऽस्मि ते सत्त्वेन, याचस्व किञ्चित्। राज्ञोचे— न किमपि न्यूनं मे, केवलं यदा मे मृत्युः स्यात् कथय। व्यन्तर उवाच— षण्मासावशेषे आयुषि स्वयमेत्य वक्ष्यामि।

---

१ 'तारक'पुर'। २ क ग-घ 'क्रम'। ३ ग—'सूरिभिरभाण'। ४ ग पातयिष्यत। ५ क—'धर्मद्वारेण'।

षण्मासावशेषे आयुषि पुनरागत स । राज्ञोक्तम्— कियन्मे आयु-
रिति[1] । व्यन्तरो वदति— देव !

'गङ्गा'ऽन्त'र्मागधे' तीर्थ, नावाऽवतरत सत ।
मऊाराचक्षरग्रामोप–कण्ठे मृत्युरस्ति ते ॥१॥[3]

षण्मासान्ते इति विद्या । पानायाग्निर्गच्छन्त धूम यदा द्रक्ष्यसि ५
तदा मृत्युर्ज्ञातव्य । साधना च कार्या पारलौकिकी । इति गदि-
त्वा गतो देवजातीय । राजा प्रात सूरिपार्श्वं गत । सूरिरुवाच—
राजन् ! यद् व्यन्तरेण योऽग्रे कथित आयु प्रमाण तत् तथैव । धर्म
पायय गृह्णीथा । तदाकर्ण्य भूपस्तुतोष विसिष्मिये च । अहो
ज्ञानम् ! अथवा विस्मय एव क ? । सूरस्तेजस्वी, इन्दुराल्हादक, १०
'गङ्गा'ऽम्भ पावनम्, जैना ज्ञानिन इति । दिनद्वये गते सूरि
श्रीआमस्य पुर प्रसङ्गेन श्रीनेमिनाथस्याशीर्वाद पपाठ । यथा—
लावण्यामृतसारसारणिसमा सा 'भोज'भू स्नेहला

सा लक्ष्मी स नवोद्गमस्तरुणिमा सा 'द्वारिका' तत् बलम् ।
त गोविन्द-शिवा-समुद्रविजयप्राया [5]प्रियाप्रेरका १५
यो जीवेषु कृपानिधिर्व्यधित नोद्वाह स नेमि श्रिये ॥२॥[6]
भूयोऽपि—

मग्ने कुटुम्बजम्बाले, यैर्मिथ्याकार्यजर्जरे ।
'नोन्नयन्ते' नतो नेमि–स्ते चेज्जीवन्ति के मृता ? ॥२॥[8]

तथा 'रैवतक'तीर्थमहिमा सूरिभिर्व्याख्याय पल्लवित । यथा २०
भूमिमाहत्योत्थाय परिकर बद्ध्वा सरभस भूप. प्रतिशुश्राव—'रैव-
तके' नेमिमनभिवन्द्य मया न भोक्तव्यमिति । लोकैर्निषिद्ध —
राजन् ! मा, मा, दूरे 'रैवतिका' गिरि, मृदवो भवादृशा ।

१ घ आयु' । २ क– मगध । ३ अनुष्टुप् । ४ ग– आयुष्प्रमाण । ५
ख प्रिया प्रेरका । ६ शार्दूल० । ७ घ– काम० । ८ अनुष्टुप् ।

राजाऽऽह– प्रतिज्ञात मे न चलति । तत सह सूरिणा आमो लक्षमेक पृष्ठवाहा वृषभा करभसहस्र २० हस्तिशत ७ अश्वलक्षमेक पदातिलक्षत्रय श्राद्धकुटुम्बसहस्र २० सारसैन्यैर्द्वात्रिंशदुपवासै 'रैवतका'याचालीत् । 'स्तम्भन'तीर्थं यावद् गतः । तत्र

५ क्षुत्तापेन व्याकुलितोऽपि प्राणसन्देह प्राप्तोऽपि नाहारमग्रहीत् । भीतो लोक । खिन्न सूरि मन्त्रशक्त्या कूष्माण्डीदवीं साक्षादानिनाय । तदग्रे कथयामास– तत् कुरु येन राजा जेमति जीव ति च । तद्वचनात् कूष्माण्डी बिम्बमेक मह्च्छिरसा बिभ्रती गगनेन आमसविध गता ऊचे च– वत्स ! साऽहमम्बिका । तव

१० सत्त्वेन तुष्टा । गगने आगच्छन्तीं मा त्व साक्षाद्द्राक्षा । मयेद 'रैवते'कदेशभूतादवलोकनाशिखरान्नेमिनाथबिम्बमानीतम् । इद वन्दस्व । अस्मिन् वन्दिते मूलनेमिर्वन्दित एव । कुरु पारणकम् । सूरिभिरपि तत् समर्थितम् । लोकेनापि स्थापितम् । तद् बिम्ब वन्दित्वा राज्ञा ग्रासग्रहण चक्रे । अद्यापि तद् बिम्ब 'स्तम्भ'तीर्थे

१५ पूज्यत । 'उज्जयन्त' इति प्रसिद्ध तत् तीर्थम् । इयातोद्यानि श्रानयन्नामो विमलगिरौ' वृषभध्वज सोत्सव वन्दित्वा यावद् 'रैवता'द्रिं गत तावत् तत् तीर्थं दिगम्बरै रुद्धम्, श्वेताम्बरसङ्घ प्रभुत्व न लभत । आमेन तज्ज्ञातम् । ज्ञात्वोचे– युद्ध कृत्वा निषेद्धॄन् हत्वा श्रीनेमिं नस्यामि । तावत् तत्र दिगम्बरभक्ता एकादश राजा-

२० नो मिलिता । सर्वे युद्धवताना । तदा बप्पभट्टिना भणित आमः– राजेन्द्र ! धर्मकार्ये पापारम्भ कथ क्रियते ? । लीलयैव तीर्थमिदमात्मसात्करिष्ये । भवद्भि स्थिरै स्थेयम् । एव भूप प्रबोध्य बप्पभट्टिरुपदिगम्बरमुपेतद्भक्त भूप च नर प्रहित्याचभाषत्– इद तीर्थं यस्याऽम्बिका दत्ते तस्य पक्षस्य सत्वमिति मन्यध्वे । तैर-

१ म घ स्वाम सर्गे । रैवतका० । २ 'अम हान भायायाम् । ३ घ स- समानिम् । ४ ग- 'तावता' । ५ ग- हत्वा नेमिं' । ६ घ राजन्' । ७ घ- 'तद्भक्तभूप' ।

कम्—युक्तमेतत् । ततो बप्पभट्टिना 'सुराष्ट्र'वास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्यकाः पञ्चसप्तवार्षिक्यो [१]मेलिताः । मिलिताः सभ्याः । बप्पभट्टिना अम्बादेवीपार्श्वात् कथापितम्— यदि सर्वाः [२]श्वेताम्बरश्रावककन्यकाः—

[३]"उज्जित'सेलसिहरे दिक्खा नाणं निरसी(सी?)हिया जस्स । ५
तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥१॥"[४]

इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थम्, पक्षान्तरे तु दिगम्बरीयं तीर्थमिति । तत आनीता मुग्धबालिकाः । सर्वाभिः श्वेताम्बरपक्षश्रावकबालिकाभिः पठिता सा गाथा । अपराभिस्तु नैकयाऽपि । ततो जातं श्वेताम्बरसाद् 'रैवत'तीर्थम् । अम्बिकया १० स्वःस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता । ततो [५]नंष्टा दिक्पटा 'महाराष्ट्र'दिदक्षिणदेशानगमन् । राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात् तत्र मिलितैर्नेमिर्नेमे । वित्तं ददे । 'प्रभासे' चन्द्रप्रभः प्रणेमे । बन्दिमोक्षः सर्वत्रापि कारितः । आमस्य भुक्तौ 'गूर्जरा'दिदेशास्तदा तीर्थानां चिरं पूजोपयोगिनो ह्यासा याः(?) प्रकृताः । एवं कार्याणि १५ कृत्वा ससूरिर्नृपो 'गोपगिरिं' प्राविशत् । सङ्घपूजादिमहास्तत्र नवनवाः । [६]प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः । आपृष्टः सः । लोकोऽपि क्षमितः । अनृणो देशः कृतः । सह सूरिणा नावाऽऽरूढो [७]'गङ्गा'सरित्तीरे तीर्थे 'मागधं' गतः । तत्र जले धूमं दृष्टवान् । तदा सूरीन्द्रमप्राक्षयत् । संसारमसारं विदन् अनशनमगृह्णात् । २० समाधिस्थः श्रीविक्रमकालात् अष्टशतत्रयेषु नवत्यधिकेषु व्यतीतेषु भाद्रपदे शुक्लपञ्चम्यां पञ्च परमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात् । सूरयस्तत्त्वज्ञा अपि रुरुदुः । चिरप्रीतिमोहो दुर्जय एव । सेव-

१ ख—'मिलिताः' । २ 'श्वेताम्बरकन्यकाः' ।
३ छाया—'उज्जयन्तशैलशिखरे दीक्षा ज्ञानं निषेधिका यस्य ।
तं धर्मचक्रवर्तिनमरिष्टनेमिं नमस्यामि ॥
४ आर्या । ५ ग—'नष्टा' । ६ ग—प्राप्तकाले । ७ घ—'गङ्गां सह तीरे' ।

कारत्तु चक्रन्दु —हा शरणागतरक्षावज्रकुमार ! हा राजस्थापन-दाशरथे ! हा अश्वदमननल ! हा सत्यवाग्युधिष्ठिर ! हा हेम-दानकर्ण ! हा मज्जाजैनत्वश्रेणिक ! हा सूरिसेवासम्प्रते ! हा अनृणीकरणविक्रमादित्य ! हा वीरविद्याशातवाहन ! अस्मान्
५ विहाय क्व गतोऽसि [१]। दर्शयैकदाऽस्मभ्यमात्मानम् । मैकाकिनो मुञ्च । एवं विलपन्तस्ते सूरिभिः प्रतिबोधिता —— भो भोः सत्त्व दैवेन पापेन ।

[२]आलब्धा कामधेनुः सरसकिशलयश्चन्दनश्चूर्णितो हा
छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः ।
१० दग्धः कर्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला
भग्नं कुम्भं सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम् ॥१॥[३]

तथापि मा शोचत मा शोचत, यत ——

पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य [४]नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ।
१५ मध्याह्ने सरितां जलं प्रविसृतैरापीय [५]दासैः करैः
सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ? ॥१॥[६]

इति लोकं निःशोकं कृत्वा लोकेन सह सूरिर्गोपगिरिमगात् । सूरिभिर्दुन्दुको राजा आमेन आमशोकेन जात्यमुक्ताफलस्थूलानि अश्रूण्युद्गिरन् हिमम्लानपद्मदीनवदनश्चिन्ताचान्तस्वान्तो बभाषे—
२० राजन् ! कोऽयं महतस्तव पितृशोकः ? । स हि चतुर्वर्गं ससाध्य कृतकृत्यो बभूव । यशोमयेन देहेन चाचन्द्रं जीवन्नेवास्ते । पुण्यलक्ष्मी कीर्तिलक्ष्मीश्चेति द्वे नरस्योपकारिण्यौ वल्लभे ।

पुण्यलक्ष्म्याश्च कीर्तेश्च, विचारयत चारताम् ।
स्वामिना सह यात्येका, परा तिष्ठति पृष्ठतः ॥१॥[७]

२५ अन्योऽप्येवंविधः कोऽपि भवतु । इत्येवंविधाभिर्गीर्भिर्दुन्दुक-

---

१ ख 'प्रबोधितः'। २ ख 'आलब्ध्वा'। ३ स्रग्धरा। ४ शार्दूलविक्रीडित। ५ ग-'प्रविसृतै॰'। ६ शार्दूल॰। ७ अनुष्टुप्।

राज सूरिशानो नि शोकमकार्षीत् । दुन्दुक शनै शनै परमार्हतो-ऽभूत् । राष्ट्रकार्याणि अकार्षीत् । त्रिवर्ग स समसेविष्ट ।

एव वर्तमाने काले एकदा दुन्दुकश्चतुष्पथे गच्छन् कण्टिकां नाम गणिकामुदाररूपा चिद्रूपा युवजनमृगवागुरा मदनमायामयी-मालोकिष्ट । ता मुद्रा तत्क्षीमकार्षीत् । तया दुन्दुकस्तथा वशी ५ कृतो यथा— यदेव सा वदति तत् सत्यम्, यदेव सा करोति तदेव हित मनुते । सा तु कार्मणकारिणी वाग्पटु सर्वं राज्य प्रसने हिमानीव [1]चित्रम्, भोजमातर पद्मां नाम अन्या अपि राज्ञीस्त्वक्सर्तार्विनयवतीर्लावण्यवतीस्तृणाय मनुते ।

एकदा कलाकेलिर्नाम ज्योतिषिको निशि विसृष्टे सेवकलोके १० दुन्दुकराज विजन दृष्ट्वाऽवादीत्—देव ! वय भवत्सेवकत्वेन सुखिन स्थाता आशाश्च । ततो यथातथ ब्रूमः । अय ते भोजनामा तनयो भाग्याधिकस्त्वा हत्वा तव राज्ये निवेक्ष्यते । यथार्ह स्वय कुर्वीथा । राजा तदवधार्य वज्राहत इव क्षण मौनी तस्थौ । ज्योतिषिका विस सर्ज । सा वार्ता भोजजननीसहचर्या दास्यैकया विपुलस्तम्भान्त १५ रितया श्रुता । भोजमात्रे चोक्ता । सा पुत्रमरणाद् बिभाय । राजाऽपि कण्टिकागृहमगात् । साऽपि राजान सचिन्तमालोक्या-लापीत्—देव ! अद्य कथ म्लानवदन [2] । राजाऽऽह स्म— किं क्रियते [3] । विधि कुपित । पुत्रा मे मृमुर्षानिना दैवप्रत्ययशतेन कथित । कण्टिका वदति स्म— का चिन्ता [3] । मारय पुत्रम् । २० सुतमपि निर्दलयति राज्यलुब्धा । सुतो न सुत । सुतरूपेण शत्रु रेव स । तद्वचनाद् दुन्दुकः सुत जिघासामास । यावता घातयि ष्यति तावता भोजमात्रा पाटलीपुत्रे स्वभ्रातृणा [4] शूराणा [5] राज्यश्री स्वयंवरमण्डपाना स्नेहस्थाना धर्मज्ञानामग्रे प्रच्छन्नलेखेन ज्ञापितम्, यथा— एवमेव भवता भागिनेयो विनक्ष्यति । रुष्टो राजा । आगत्य २५

[1] अशास्त्रवृक्षम् । [2] क 'तथतय' । [3] क–'दाष्टप्रत्यय०' । [4] ख ग 'पाटली पुर' । [5] ख–'शूराणां' । [6] ख घ– भागेय । [7] घ राजा दृष्ट.' ।

एनं गृहीत्वा गच्छत । रक्षत जीववत् । मा स्माहं भवत्सु सत्सु निष्पुत्रोऽभूवम् इति । तेऽप्यागच्छन्, दुन्दुकमनमन् । उत्सवमिषेण भागिनेयं भोजं गृहीत्वा 'पाडलीपुत्र'मगमन् । तत्र नमपीपठन् । अलीललन् । शास्त्राभ्यासमचीकरन् । जीववदमसत । तत्र

५ तस्य पञ्चाब्दी दिनैः कतिभिरप्यूनाऽतिक्रामति स्म । कण्टिका दुन्दुकाग्रे कथयति स्म– देव ! पुत्ररूपस्ते शत्रुर्मातृशाले वर्धते । नखच्छेद्य पर्शुच्छेद्यं मा कुरु । अत्रानीय च्छन्न यमसदन नय । राजाऽऽह– सत्यमेतत् । ततो दूतमुखेन दुन्दुको भोजं तन्मातुलपार्श्वेऽयाचत् । ते भोजं नार्पयन्ति । पुनः पुनः स्वान् दूतान्

१० दुन्दुकः प्रहिणोति । भोजमातुला प्राहुः– राजन् ! वयं तव भाय विद्म, नार्पयाम एवैनम् । धर्मपात्रमसौ । अन्योऽपि शरणागतो रक्ष्य क्षत्रियैः, किं पुनरीदृक् भगिनीपुत्रः ? । बलात्कारं ब्रूषे चेद् युद्धाय प्रगुणीभूयागच्छे । भागिनीपतये चमत्कारं दर्शयिष्याम. । तद् दूतैराग योक्तम् । दुन्दुकः कुपितोऽपि तान् हन्तु न

१५ क्षम । भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापित कथञ्चिद् उपपितुर्नैति । ततो दुन्दुकेन बप्पभट्टिसूरय प्रार्थिता –यूय गत्वा भोजं सुतमनुनीयानयत मानयत माम् । अनिच्छन्तोऽपि तत्सैनिकैः सह 'पाडलीपुत्र' चेलु । अर्धमार्गे सम्प्राप्ते स्थित्वा विमृष्ट ज्ञानदेशा– भोजस्तावन्मम वचसा नृपसमीप नेष्यति । आनीयते वा यथा

२० तथा तदाऽऽनीतोऽपि पित्रा हन्यते । वागुल्लङ्घने राजाऽपि क्रुद्धो मां हन्ति । तस्मादितो व्याघ्र इतो दुस्तटी इति न्याय. प्राप्त । समाप्त च ममायु., दिवसद्वयमवशिष्यते, तस्मादनशन शरणम् । इति विमृश्यास्तत्रस्थयतयो भाषिता.– नन्नसूरि-गोविन्दाचार्यौ

---

१ ग-'रक्षति' । २ ख घ भागेय' । ३ ग-घ-'पाटली० । ४ क-ख-'अलीलरन्' । ५ 'मासाळ' इति भाषायाम् । ६ ग- तन्मातुलेभ्योऽयाचीत् । ७ ग-'मनुनीयानयततमाम्' । ८ ख 'घ -'पाटली० । ९ ग- 'दृष्टा' ।

प्रति हिता भवेत। श्रावकेभ्यो मिथ्या दुष्कृतं ब्रूयात्। परस्परम-
मत्सरतामाद्रियध्वम्। क्रियां पालयेत। [2]आबालवृद्धान् लालयेत।
न[3] वयं युष्मदीयाः, न यूयमस्मदीयाः, सम्बन्धाः कृत्रिमाः सर्वे।
इति शिक्षयित्वाऽनशनस्याः समतां प्रपन्नाः।

अर्हतस्त्रिजगद्वन्द्यान्, सिद्धान् विध्वस्तबन्धनान्। ५
साधूंश्च जैनधर्मं च, प्रपद्ये शरणं त्रिधा ॥१॥[4]
महाव्रतानि पञ्चैव, षष्ठकं रात्रिभोजनम्।
विराधितानि यत् तत्र, मिथ्या दुष्कृतमस्तु मे ॥२॥[5]

इति ब्रुवाणा आसीना अदीनाः [6]कालमकार्षुः। श्रीबप्पभट्टिसूरीणां
श्रीविक्रमादित्यादष्टशतवर्षेषु गतेषु भाद्रपदे शुक्लतृतीयायां रवि- १०
दिने [7]हस्तार्के जन्म, पञ्चनवत्यधिकेषु गतेषु स्वर्गारोहणम्। तदैव
'मोढेरे' नन्नसूरीणामग्रे भारत्योक्तम्—भवद्गुरव 'ईशान'देवलोकं
गताः। तत्र बाढं शोकः प्रससार।

शास्त्रज्ञाः शुचयस्तपस्विनो बहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः। १५
सर्वस्यामिमता गुणैः परिवृता भूमण्डनाः सज्जना
धातः[8]! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः ॥१॥[9]

वृद्धैस्तु प्रबोधो दत्तः—

छित्त्वा जीर्णमयं देहं, लभते भो पुनर्नवम्।
[10]कृतपुण्यस्य मर्त्यस्य, मृत्युरेव रसायनम् ॥२॥[11] २०

इति। दुन्दुकेन सूरिभिः सह प्रहिता ये सैनिकास्ते निवृत्य
दुन्दुकपार्श्वे गताः। सोऽपि पश्चात्तापानलेन दन्दह्यते स्म।
भोजेनाऽपि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां मुखा-
दवगतम्, यथा—सूरय एवं मृताः, तव पार्श्वे नाजग्मुः। मा स्माय-

---

१ ख–'प्रतिहता भवेत् (?)'। २ क–'बाल्यवृद्धान्'। ३ क–'नो'। ४-५ अनुष्टुप्
६ पञ्चत्वं प्राप्ताः। ७ ख–'हस्तार्क्षे'। ८ हे ब्रह्मन्!। ९ शार्दूल०। १० ख-ग-
'कृतपुण्य०' ११ अनुष्टुप्।

मस्मदुपरोधसङ्कटे पतित पितु पार्श्वं गत सन् म्रियत इति कृपां दधु । तदेतदाकर्ण्य भोजस्तया पीडितो यथा वज्रपातेनापि न पीड्यते । पितुरन्तिक नागादसौ ।

एकदा मालिक कोऽपि पूर्वमामराजभृत्यो विदेशं [1]भ्रमित्वा भोजान्तिकमागत 'पाटलीपुरे' । तेनोक्तम्— देव ! त्व मत्स्वामिकुलदीप । मया विदेशे सद्गुरोर्मुखाद विद्यैका लब्धा 'मातुलिङ्गी' नाम ययाऽभिमन्त्रितेन मातुलिङ्गेन हता [2]करि-हरिप्राया अपि बलिनो म्रियन्ते, मानवाना तु का कथा[3] । देव ! गृहाण ताम् । भोजेन सा तस्मादात्ता । प्रमाणिता । सत्या । मालिको दान-मानाभ्यां भोजेन रञ्जित । मातुला सर्वे भोजेन विद्या शक्तिं प्रकाश्य तोषिता । ते ऊचु —यदीय ते शक्तिस्तदा प्राभृत-मिषेण मातुलिङ्गानि गृहीत्वाऽस्माभि सह पितु समीप व्रज । पितर निपात्य राज्य गृहाण । तद् रुरुचे भोजाय । चलितो बहुमातुलिङ्गशोभी सन् गत पितुर्द्वार कथापित च—– तात ! त्व पूज्योऽह शिशु , त्वत्तो मरण वा राज्य वा सर्वं रम्य मे । राजा सन्तुष्ट —अहो विनीतसुत । आयातु । इति विमृश्य आहूतो भोजः । शोधितो मध्यमागत । एकासनस्थौ [4]कण्टिका राजानौ पृथक् पृथग् मातुलिङ्गेन जघान । सम्यग्विद्या हि नान्यथा । उपविष्टो दुन्दुकराज्ये भोज । तन्मातुला अतुल तोष दधु । माता पद्मा प्रससाद । दुन्दुकेन धनहरण-मासोद्वासनादिदूनचरा [5]राजन्यका पुनर्जातमात्मान मेनिरे । महाजनो जिजीव । वर्णा सर्वे उन्मेदु । ससारसरोऽम्भोज भोजं कमला भेजे । दोर्बलात् परिच्छदबलाच्च जगज्जिगाय । अथ कृतज्ञतया 'मोढेर'पुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरान् प्रैषीत् । ते गतास्तत्र । विज्ञप्तिर्दर्शिता

---

१ ग 'मुनेर्नि' । २ 'माळी' इति भाषायाम् । ३ ग 'अन्यथा' । ४ ग-'प्रदीप' । ५ 'कृत्वा निह०' ६ ग-'षण्डीराजा०' । ७ ग धनहरणेन प्रदो०' । ८ ग-'राजन्यक'।

तैस्तत्र । वाचिता नन्नसूरि-गोविन्दाचार्यैर्यथा— 'स्वस्ति श्री-'मोढेरे' परमगुरुश्रीनन्नसूरि-श्रीगोविन्दसूरिपादान् सगच्छान् 'गोपगिरि'दुर्गात् श्रीभोजः परमजैनो विज्ञपयति यथा— इह तावत् प्रज्ञागङ्गाहिमाद्रयः समाचारीनागरीसौभाग्यवर्धनमकरध्वजाः क्षितिपतिसदःकुमुदिनीश्वेतदीधितयो भारतीधर्मपुत्राः श्रीबप्पभट्टि-सूरयस्त्रिदिवलोकलोचनलेह्यलुलितपुण्यलावण्यतामादधिरे । तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थः । [1]दृष्टविंशतिकाप्रमाणेनात्र पादोऽव-धार्यः' । तद् दृष्ट्वा भक्तिरहस्यं सूरयः ससङ्घाः सुतरां जहृषुः । सङ्घानुमत्या गोविन्दाचार्यं 'मोढेरके' मुक्त्वा श्रीनन्नसूरयो 'गोप-गिरि'मसरन् । भोजः पादचारेण ससैन्यः सम्मुखमायातः । गुरोः पादोदकं पपौ । उल्लसत्तृष्णो गिरं शुश्राव । स्थानस्थानमिलित-जनहृदयसङ्घट्टचूर्णि[3]तहारमौक्तिकप्रचलितराजपथं पुरं निनाय । सिंहासने निवेशयामास तान् । मङ्गलं चकार । तदाऽऽज्ञामयो बभूव । तद्व्याख्यानात्मवद् ददर्श । तद्भक्तान् विबुधदीक्षाञ्चक्रे । तदुप-देशाज्जिनमण्डितां मेदिनीं विदधौ । दुन्दुकस्य तादृग् मरणं स्मृत्वा कुपथेषु न रेमे । 'मथुरा'-'शत्रुञ्जया'दिषु [4]यात्रां चकार । एकादश व्रतानुच्चचार । पूर्वराजर्षियशांसि उद्दधार । चिरं राज्यं भेजे । इत्येवं 'गोपगिरौ' भोजो धर्मं लालयामास उदियाय च । अन्यैरपि पुण्यपुरुषैरेवं भाव्यम् ॥

॥ इति [5]श्रीबप्पभट्टिचरित्रम् । ग्रन्थाग्रं ६०० ॥



१ ग-'देमा॰' । २ क-'दृष्टविंशतिप्रमाणेन' । ३ ख-'इरितहार॰' । ४ घ-'यात्राश्चकार' । ५ घ-'भट्टिसूरिचरित्रप्रबन्धः' ।

[ १० ]

## ॥ अथ हेमसूरिप्रबन्ध ॥

'पूर्णतल्ल'गच्छे श्रीदत्तसूरि प्राप्त 'वागड'देशे 'वटपद्र' पुर
गत । तत्र स्वामी यशोभद्रनामा राणक ऋद्धिमान् । तत्सौधा-
५ न्तिके उपाश्रय श्राद्धैर्दत्त । रात्रौ उन्मुद्रचन्द्रातपायां राणकेन
ऋषयो दृष्टा उपाश्रये निषण्णा । श्रावकामात्यपार्श्वे पृष्टम्—
के एते [१] । अमात्य प्रोचे— देव ! महामुनयोऽमी विश्रम-
व्रतधारिण । राणकस्य श्रद्धा बभूव । प्रातर् वन्दितु गत ।
देशना । श्रावकत्व सुष्ठु सम्पन्नम् । मासकल्पमेक स्थिता ।
१० परदेश गता गुरवः । तावता वर्षाकाल । देवपूजादिधर्मव्यापार-
साराण्यहानि गमयति राणः । प्राप्ता शरद् । चैरिक्षेत्राणि [२]
गतो राण । तावता कुण्ठानि ज्वालयन्ति भृत्याः । तेषु सर्पिण्येका
गर्भभारालसा ज्वालादिभिर्दह्यमाना तेडफडायमाना सिमिसिमाय-
माना राणेण दृष्टा । दयोत्पन्ना । विरक्तश्च । हा हा ससार, धिग्
१५ गृहवास, कस्य कृते पापमिदमाचर्यते [३] । राज्यमपि दुष्पाल
मायाजाल नरकफलम् । तस्मात् सर्वसङ्गपरित्यागः कार्य । इति
ध्यायन् सौधमायासीत् । निशि श्रावकमन्त्रिणमाकार्य रहोऽप्राक्षीत्
मम धर्मगुरव श्रीदत्तसूरय क्व विहरन्ति [४] । मन्त्र्याह—
'डिण्डुआणवे' । विसृष्टो मन्त्री शेषपरिच्छदश्च । राणको मिताम्ब-
२० परिधार सार हारमेक सह गृहीत्वा शीघ्र 'डिण्डुआणक'
प्राप्त । गुरवो दृष्टा वन्दिता । भववैराग्याद् रुदित । पदोर्लगित्वा
पचित स्वपापम् । गुरुभिर्भणितम्— राणक ! चारित्र विना न
छुट्यन्ति पापेभ्यो जीवाः । राणकेन न्यगादि— सद्यो दीयतां
तर्हि तत् । सूरय ओमित्याहु स्म । राणकेन 'डिंडुआणकीय'-

१ चन्द्रप्रभायाम् । २ क्षत्र–चारणक्षत्रा० । ३ पशुक्षेत्राणि । ४ अर्धपदपा पकणात्
इति प्रतिभाति । ५ 'वडफडती' इति भाषायाम् । ६ 'छूटे छे' इति भाषायाम् ।

श्रावका समाकारिता, हारोऽर्पित । दिव्य प्रासाद कारितामिति । तच्चऽऽचरित तै । अद्यापि दृश्यते स तत्र । राणकैर्व्रतमात्तम् । नन्द्यामेव षड्विकृतिनियम, एकान्तरोपवासा यावज्जीवम् । तस्य राणयशोभद्रस्य गीतार्थत्वात् सूरिपद जातम् । श्रीयशोभद्रसूरिरिति नाम । तदीयपट्टे प्रद्युम्नसूरिर्ग्रन्थकार ।　५
तत्पट्टे श्रीगुणसेनसूरि । श्रीयशोभद्रसूरिपादाश्चयोपवासा 'रैवते' नेमिनाथदृष्टौ कृतानशना स्वर्लोकमैयरु । गुणसेनसूरिपट्टे श्रीदेवचन्द्रसूरय [1]ठाणांगवृत्ति–शान्तिनाथचरितादिमहाशास्त्रकरणनिर्व्यूढप्रज्ञाप्राग्भारा । ते विहरन्तो [2]'धंधुक्क'पुर 'गूर्जर'धरा'सुराष्ट्रा'सन्धिस्थ गता । तत्र देशनाविस्तर ।　१०

एकदा नेमिनागनामा श्रावक समुत्थाय श्रीदेवचन्द्रसूरीन् जगा— भगवन् ! अय 'मोढ'ज्ञातीयो मद् भगिनीपाहिणिकुक्षिभू ठक्कुरचाचिगनन्दनश्च(श्चा)ङ्गदेवनामा भगवता देशना श्रुत्वा प्रबुद्धो दीक्षा याचते । अस्मिंश्च गर्भस्थे मम भगिन्या सहकारतरुः स्वप्ने दृष्ट । स च स्थानान्तरे उप्तस्तत्र महती　१५
फलस्फातिमायाति स्म । गुरव आहु —स्थानान्तरगतस्यास्य बालस्य महिमा प्रैधिष्यते । महत् पात्रमसौ योग्य सुलक्षणो दीक्षणीय, केवल पित्रोरनुज्ञा माद्या । गतौ मातुल-भागिनेयौ पाहिणि चाचिगान्तिकम् । उक्ता व्रतवामना । कृतस्ताभ्यां प्रतिषेध करण वचनशतै । चाङ्गदेवो दीक्षा लब्धौ । स हेमसूरि प्रभु । तेन　१५
यथा श्रीसिद्धराजो रञ्जित, व्याकरण कृतम्, वादिनो जितास्तथा च कुमारपालेन सह प्रतिपन्नम् । कुमारपालोऽपि यथा पञ्चाशद्वर्षदेशीयो राज्ये निषण्ण । यथा श्रीहेमसूरयो गुरुत्वेन प्रतिपन्ना । तैरपि यथा देवबोधिः प्रतिपक्ष पराहत । राजा सम्यक्त्वग्राहित श्रावक कृत । निर्वीराधन (?) च मुमोच स । तद्　२०

---

[1] क घ 'मादतम् । २ जैनानां तृतीयमङ्गम् । ३ क– धुंधुइ', ख धुंधुक०' ।
[4] घ–'मातुल(स)मागयौ ।

प्रबन्धचिन्तामणितो ज्ञेयम् । किं चर्वितचर्वणेन ? । नवीना-
स्तु केचन प्रबन्धाः प्रकाश्यन्ते—

**कुमारपालेन** अमारौ प्रारब्धायां आश्विनशु(सु)दिपक्षः समा-
गात् । देवतानां [1]**कण्टेश्वरी**-प्रमुखाणां अबोटिकैर्नृपो विज्ञप्तः—
५ देव ! सप्तम्यां सप्त शतानि पशवः सप्त महिषाः, अष्टम्यां अष्ट महिषा
अष्टौ शतानि पशवः, नवम्यां तु नव शतानि पशवो नव महिषा
देवीभ्यो राज्ञा देया भवन्ति पूर्वपुरुषक्रमात् । राजा तदाकर्ण्य श्रीहेमा-
न्तिकमगमत् । कथिता सा वार्ता । श्रीप्रभुभिः कर्णे एवमेव-
मित्युक्तम् । राजोत्थितः । भाषितास्ते—देयं दास्यामः । इत्युक्त्वा
१० [2]वहिका(?)क्रमेण रात्रौ देवीसदने क्षिप्ताः पशवः । तालकानि दृढी-
कृतानि । उपवेशितास्तेषु प्रभूता आसराजपुत्राः । प्रातरायातो नृपेन्द्रः ।
उद्घाटितानि देवीसदनद्वाराणि । मध्ये दृष्टाः पशवो [3]रोमन्थाय-
माना निर्वातशय्यासुस्थाः । भूपालो जगाद— भो अबोटिकाः !
एते पशवो मयाऽमूभ्यो दत्ताः । यद्यमूभ्यो रोचिष्यन्ते, ते तदा ग्रसि-
१५ ष्यन्ते, परं न ग्रस्ताः; तस्मान्नामूभ्योऽदः [4]पललं रुचितम् । भवद्भ्य
एव रुचितम् । तस्मात् तूष्णीमाध्वम् । नाहं जीवान् घातयामि ।
स्थितास्ते विलक्षाः । मुक्ताश्छागाः । छागमूल्यसमेन तु धनेन
देवेभ्यो नैवेद्यानि दापितानि । अथाश्विनशुक्लदशम्यां कृतोपवासः
क्ष्मापो निशि चन्द्रशालाया ध्याने उपविष्टो जपति । बहिर्द्वास्थाः
२० सन्ति । गता बह्वी निशा । स्त्र्येका दिव्या प्रत्यक्षाऽऽसीत् ।
उक्तस्तया सः— राजन् ! अहं तव कुलदेवी **कण्टेश्वरी** ।
[5]ऐषमः किमिति त्वया नास्मद्देयं दत्तम् ? । राज्ञोक्तम्—
जैनोऽहं दयालुः पिपीलिकामपि न हन्मि, का कथा पञ्चेन्द्रियाणाम् ? ।
तच्छ्रुत्वा **कण्टेश्वरी** क्रुद्धा, राजेन्द्रं त्रिशूलेन शिरसि हत्वा
२५ जगाम । राजा कुष्ठी जातः । दृष्टं स्वपुर्विनष्टम् । विषण्णः ।

---

१ घ-'कंटेश्वरी-'। २ सेवकैः (?)। ३ उद्गीर्णस्य वाऽनगीर्णस्य रोम कुर्वन्त.। ४ मांसम् । ५ अस्मिन् वर्तमाने वर्षे ।

मूल्येन मन्त्रिणमुदयनमाकार्य तत्स्वरूपं निगद्य पप्रच्छ—मन्त्रिन् ! देवी पशून् याचति, दीयन्ते न वा ? । मन्त्री दाक्षिण्यादाह —देव ! राजा यत्नेन रक्ष्य एव । भूपो न्यगादीत्—निःसत्त्वो वणिगसि । यदेव ब्रूषे मम किं कार्यं जीवितेन ? । कृतं राज्यम् । लब्धो धर्मः । हताः शत्रवः । केवलं काष्ठानि देहि रहः, येन प्रातर्मामीदृशं दृष्ट्वा लोको धर्मे नोद्यमं करोति ।　५
उदयनेन चिन्तितम्—अहो महत्कृच्छ्रमापतितम् ! । पारवश्यमूलं नियोगं धिक् । मन्त्रिणोक्तं सद्यो बुद्धिवशात्—श्रीहेमसूरयो विज्ञप्यन्ते । राज्ञोक्तम्—तथाऽस्तु । गतो मन्त्री उपसूरि । सूरिभिर्जलमभिमन्त्र्यार्पितम् । अनेन राजाऽऽच्छोत्य इति ।　१०
सचिवेन तथा चक्रे राज्ञः । राजा [१]दोगुन्दुकदेव इव दिव्यरूपः सम्पन्नो भक्तश्च समधिकं श्रीगुरुं वन्दितुं ययौ । गुरुर्देशनां दत्ते—

शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः
　सन्ति श्रीपतयो निरस्तधनदास्तेऽपि क्षितौ भूरिशः ।
किन्त्वाकर्ण्य निरीक्ष्य वाऽन्यमनुजं दुःखार्दितं यन्मन-　१५
　स्तद्रूपं प्रतिपद्यते जगति ते सत्पुरुषाः पञ्चषाः ॥१॥[२]

राजा स्वावासं गतः । राज्यं समृद्धं भुनक्ति ।

एकदा प्रभुभिर्भरतस्य चक्रिणः साधर्मिकवात्सल्यकथाऽकथि । तां श्रुत्वा भूपः साधर्मिकवात्सल्यं दिव्यभोजन-वसन-कनकदानैः प्रतिग्रामं प्रतिपुरं प्रारेभे । तद् दृष्ट्वा कविश्रीपालपुत्रः सिद्धपालः　२०
सूक्तमपाठीत्—

क्षिप्त्वा वारिनिधिस्तले मणिगणं रत्नोत्करं 'रोहणो'
　रेणावावृत्य सुवर्णमात्मनि दृढं बद्ध्वा '[३]सुवर्णाचलः' ।
क्ष्मामध्ये च धनं निधाय धनदो त्रिभ्यत् परेभ्यः स्थितः
　किं स्यात् तैः कृपणैः समोऽयमखिलार्थिभ्यः समर्थं ददत् ॥१॥[४]　२५

---

१ उपदासम् । २ एतत्सम्बन्धार्थं प्रेक्ष्यतां परिशिष्ट । ३ ख-घ-'सुरा' । ४ शार्दूल० । ५ मेरु । ६ शार्दूल० ।

प्रमलक्षदचित्र । पुन कदाचित् पठितम्—

श्रीवीरे परमेश्वरेऽपि भगवत्याख्याति धर्मं स्वय
प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षम श्रेणिकः ।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधाद्
५ यस्यास्वाद्य वच सुधां स परम श्रीहेमचन्द्रो गुरु ॥१॥[1]

अत्रापि लक्षदत्ति । अन्येद्यु कथाप्रसङ्गे प्रभव प्राहु स्म—
पूर्वं श्रीभरतो राजा 'श्रीमाल'पुरे 'नगर'पुरे 'शत्रुञ्जये' 'सोपारके' 'अष्टापदे' च जीवन्तस्वामिश्रीऋषभप्रतिमावन्दनार्थं च चतुरङ्ग' चमूचक्रोच्छलितरज पुञ्जच्छादितदिक्चक्रवाल सङ्घपतिर्भूत्वा
१० ववन्दे । तदाकर्ण्य श्रीचौलुक्यः स्वय कारितरथेऽर्हद्बिम्बमारोप्य ससैन्य 'शत्रुञ्जयो' 'ज्जयन्ता'दियात्रायै चचाल । सङ्घे उदयनसुतो वाग्भटश्चतुर्विंशतिमहाप्रासादकारापक, नृपनागाख्यश्रेष्ठिभू श्रीमान् आभडः, षड्भाषाकविचक्रवर्ती श्रीपालः, तद्भू सिद्धपालः, कवीनां दातॄणां च धुर्यो भाण्डागारिक कपर्दी,
१५ 'परमार'वंश्यो 'कूर्चालसरस्वती' 'प्रह्लादन'पुरनिवेशको राण प्रह्लादनः, राजेन्द्रदौहित्र प्रतापमल्लः, नवतिलक्षहेमस्वामी श्रेष्ठिछाडाकः, राज्ञी भोपलदेवी, चौलुक्यपुत्री लील्लूः, रॅाण अम्बडमाता माऊः, आमडपुत्री चाम्पल इत्यादि, कोटीश्वरो लोक, 'श्रीहेमचन्द्रसूरिपादा, श्रीदेवसूरय, श्रीधर्मसूरय, लक्ष-
२० सङ्ख्या मानवा । स्थाने स्थाने प्रभावना। जिने जिने छत्रचामरादिदानम् । पात्राणां इच्छासिद्धि । प्रथम 'रवता'द्रितले साङ्गलीयाख्योपथ्या दिशि गत्वा स्थित क्षितिपति । ना दानिर्घोष । रात्रौ भारत्या श्रीहेमसूरिभ्य आदिष्टम्— राज्ञा नाद्राधारोढव्य,

१ ख– लक्ष दत्ति' । २ शार्दूल० । ३ ख घ– नगर पुरे । ४ संस्कृत प्राकृत शौरसनी मागधी पैशाची अपभ्रंश इति भाषाषट्कम् । ५ घ– वश । ६ पाल्हनपुर' इति भ पायात् । ७ ख–'राजा अम्बड०' । ८ ग 'चाम्पलदे इत्यादि' । ९ घ– 'श्रीहेमसूरि०' । १० ख–'पापा' । ११ घ–'नैषाद्रौ आरोढव्य ।

विघ्नसम्भवात् । अत्रैव देवो मदनसूदनो नेमिर्वन्द्यः । तथैव कृतम् । सङ्घस्तु 'रैवत'गिरौ श्रीनेमिस्नानविलेपनपुष्पफलवस्त्रपूजानैवेद्य-नादमालादिग्रहणैर्भवमपूरि । राजाऽप्यक्षवाटकवस्त्रापथराजीमत्या-दिगुहाप्रायस्थानयात्रया महादानैश्च धनजीवितन्ययोर्लाभमग्रहीत् । 'देवपत्तने' चन्द्रप्रभयात्रा ससङ्घस्यास्यासीत् । ततो व्याघुट्य ५ 'शत्रुञ्जया'द्रिं गतः । आरूढः । मरुदेवादर्शनपूजे । तत्राशीः—

बालो मे वृषभो भरं सुमनसामप्येष किं सासहे–
मैन्दं धेहि किरीटमस्य करयोर्मा काङ्कणी भूद् व्यथा ।
गाङ्गेयं कटिसूत्रमत्र तनुकं युक्तं वलिष्ठेऽप्ययम्–
नीथे मातृदयागिरः सुरजने हास्यावहाः पान्तु वः ॥१॥

पुरः कपर्दी, तत्र कायोत्सर्गः । आशीस्तु—

रूढिः किलैष वृषभः कपर्दिनं
निषेवतेऽस्मिन् 'विमला'चले पुनः ।
अयं कपर्दी वृषभं शुभाशय–
स्तनोतु वः शान्तिकपौष्टिकश्रियम् ॥१॥[1]

पुरो वृषभप्रभुप्रासादः । देवदर्शनं पूजा । आशीर्वादः—

नव्योद्वाहविधौ वधूद्वययुतं पुत्रं सवित्रीरति–
प्रीत्यासन्नमिव [स्]मरः किल ददौ यं वीक्ष्य सत्याशिषम् ।
कल्पद्रुर्भुवि जङ्गमः किमधुना पत्रद्वयेनोद्गत– २०
[स्]तत्त्वं स्याः शतशाख इत्यनुदिनं स श्रेयसे नाभिभूः ॥१॥[6]

चैत्यपरिपाट्यां कपर्द्याह—

श्रीचौलुक्य ! स दक्षिणस्तव करः पूर्वं मसासूत्रितः
प्राणिप्राणविघातपातकसुखः शुद्धो जिनेन्द्रार्चनात् ।

---

१ घ-'मरुदेवीदर्शन०' । २ शार्दूल० । ३ इन्द्रवंशा (?) । ४ क- 'स्वरं', ख-घ-'स्मर' । ५ ख-'सत्त्वं' । ६ शार्दूल० । ७ क-'मुखः' ।

वामोऽप्येष तथैव पातकसख शुद्धिं कथं प्राप्नुयात्
न स्पृश्येत करेण चेद् यतिपते श्रीहेमचन्द्रप्रभो ॥२॥[1]

[2]मेरुमहाध्वजाधारिताम्रदानयाचकसत्कारा प्रवर्तन्ते । मालोद्-
घट्टनप्रस्तावे तादृशी सङ्घे रात्रि च निषण्णे सह वाग्भटः प्रथमं
५ लक्षचतुष्कमवदत् । प्रच्छन्नधार्मिक कश्चित् कथापयति—लक्षाष्टौ,
एवमन्योन्येष्वीश्वरेषु वर्धयत्सु कश्चित् सपादकोटीं चकार । राजा-
ऽपि चमच्चकार, उवाच च— उत्थाप्यतां स यो गृह्णाति । उत्थित
स । यावद् दृश्यते तावद् बीदरमलिनवसनो वणिग्रूप । राज्ञा
वाग्भटो भाषित — द्रम्मसुख्य कृत्वा देहि । वाग्भटो वणिजा
१० सहोत्थाय पादुकान्तिकं गत्वा द्रम्मसुख्यं पप्रच्छ तम् । वणिजा
सपादकोटिमूल्य माणिक्य दर्शितम् । मन्त्रिणा पृष्टम्—कुत इद ते[3]।
वणिगाह— 'महुअक'वास्तव्यो मत्पिता हंसाख्य सौराष्ट्रिक
प्राग्वाट । अहं तत्पुत्रो जगडः । माता मे धारु:। मम पित्रा निधन-
समयेऽहं भाषित — वत्स । चिर कृता प्रवहणयात्रा फलिताश्च ।
१५ मेलितं धनम् । तेन च क्रीतं प्रत्येकं सपादकोटिमूल्यं माणिक्य-
पञ्चकम् । अधुना प्रभुवृषभचरणौ शरण मे । अनशनं प्रतिपन्नम् ।
क्षामिता सर्वे जीवा । एकं माणिक्यं श्रीऋषभाय, एकं श्रीनेमिनाथाय
एकं श्रीचन्द्रप्रभाय देयं , माणिक्यद्वयमात्मनोऽन्तर्धनं देयम् ।
बाह्यधनमपि प्रचुरतरमास्ते । इदानीं माता मया सहानीता कपर्दि-
२० भवने मुक्ताऽस्ति । तां जरन्तीं मातरं सर्वतीर्थाधिपतया पुराणपुरुषै-
र्निवेदितामेतां मालां परिधापयिष्यामि । श्रुत्वा हृष्टो मन्त्री राजा
सङ्घश्च । मातृसम्मुखागमनं तथैवावधाराणां मालापरिधापनम् ।
तन्माणिक्य हेम्ना खचित्वा ऋषभाय कण्ठाभरणमनुष्यविरण-
भक्तिचैत्यगर्भमाधुश्रयामहे । यंशिन साङ्घ , प्रातः पत्तनम् । प्रवर्तन्ते

१ शार्दूल० । २ ख—' मह० । ३ क ख ग एरात । ४ स्पृत० ।
५ घ-'धर्मेश्वर । ६ [illegible] 'धारुः' । ७ क घ- सारणा । ८ ग -'घन ।
९ क 'च'चित । १० 'वर्म्यो इति आवाधाम् ।

सह्मभोज्यानि प्रातिलाभनाश्च । अमारिस्तु निस्यैव।

तस्य च कुमारपालदेवस्य भगनी 'शाकम्भरी'श्वरेण 'चाहमान'-वंश्येन राज्ञा आनाकेन परिणीताऽस्ति। एकदा तौ सारिभिः क्रीडतः। क्रीडता राज्ञा सारिगृहे मुद्गतोक्तम्— मारय मुण्डिकान् पुनर्मारय मुण्डिकान् । एवं द्विस्त्रिः । टोपिकारहितशीर्षकत्वान्मुण्डिकाः 'गूर्जर'लोका विवक्षिताः । अथवा श्वेताम्बरा गूर्जरेन्द्रगुरवो मुण्डिका इति हासगर्भोक्तिः । राज्ञी कुपिता वदति— रे जङ्गडक[1] जिह्वामालोच्य नोच्यते[2], किं वक्षि[3] । न पश्यसि माम् [4] । न जानासि मम भ्रातरं राजराक्षसम्[5] ? क्रुद्धो राजा तां पदा जघान। साऽप्याह— यदि ते जिह्वां अवटुपथेन[6] कर्षयामि तदा राजपुत्रीं मा मंमस्थाः । इति वदन्त्येव सा सखीन्या निर्विलम्बं 'श्रीपत्तन'मेत्य चौलुक्याय तं परिभवं प्रतिज्ञां च स्वोपज्ञामजिज्ञपत्। चौलुक्यो ऽभाषत— इत्थमेव करिष्यामः, कौतुकं पश्य[6] । ततश्चानाकस्तस्याः तत्र गताया 'गूर्जर'नृपतेजो दुर्धरं विदन्नक्षोभि। चौलुक्योऽपि बह्वात्तपरिच्छदं मन्त्रिणमेकं तत्रत्यवृत्तान्तज्ञानाय प्रैषीत् । गतः स तत्र । जग्राह गृहम् । राजासन्नदासीमेकां धनेन रञ्जयित्वा आत्मीयं भोगपात्रमकरोत् । नित्यं सा याममात्र्यां रात्र्यामायाति रञ्जयति तम् । एकदा निशीथे साऽऽगात् । मन्त्री कुपितः— आः पापे[7] परनृगामिनि[7] किमिति विलम्बेन समागताऽसि [8] । साऽपि सप्रश्रयं मन्त्रिणमभाषत— स्वामिन् ! मा कुपः । कारणेन स्थिताऽस्मि । मन्त्रिणोचे— किं कारणम् ? । सा जगाद— प्रभो ! अहं अस्मत्य राज्ञस्ताम्बूलदासी । रात्रेर्यामे एकस्मिन् राज्ञा परिच्छदः सर्वो विसृष्टः । अहमपि विसृष्टा। विसृजता चाप्तनरं एकोऽमापि— व्याघ्रराजं हकारय । अहं स्तम्भान्तरिता कौतुकेन स्थिता । को व्याघ्रराजः ? । कथमाहूयते इति। ततो राज्ञाऽऽकारित स आगतः,

१ ख घ क्रीडता । २ घ 'मुद्गतो॰' । ३ टापी इति भाषायाम् । ४ ग अवटपथेन । ५कूपमार्गेण । ६ क– पश्य' । ७ घ–'परापरनृ॰' । ८ सविनयम् ।

कृतप्रणामः सन् राज्ञाऽऽलापि— भो ! विजनमस्ति इति भाण्यसे ।
त्वमस्माकं कुलक्रमागतः सेवकः । सद्यो व्रज । 'गूर्जरे'श्वरघातको
भूत्वा व्यापादय । लक्षत्रयं हेम्नां दास्ये । अथ स व्याघ्रराजा-
ख्यो बभाषे— देव ! हनिष्याम्येव तं राजानम् । मा स्म संशयं
५ कृथाः स्वामिन् ! । ततस्तद्वचः श्रुत्वा तुष्टः 'शाकम्भरी'श्वरः सद्यो
हेमलक्षत्रयबदरकास्तद्गृहायाचीचलत् । व्याघ्रराजं चाप्राक्षीत्
कदा केनोपायेन तं हनिष्यसि ? । व्याघ्रराजोऽवादीत् नाथ !
अद्य रविवारो वर्तते । आगन्तुकामे सोमवारे क्वचनावसरं लब्ध्वा
हनिष्यामि । उपायस्तु भरटकरूपं करिष्यामि । राजा तु 'कर्ण
१० मेरु'प्रासादे आयाति सोमवारे ध्रुवम्[1] । देवं नत्वा व्यावर्तमाना-
यास्मै बाह्याङ्गणे शेषादानमिषेण पुष्पकलम्बकमुत्पाटयिष्यामि ।
तत्र धृतया कर्तिकया[2] कङ्कमय्या घातयिष्यामि । अङ्गीकृतसाहसाना
न किञ्चिदपि दुष्करम् । अहं हतश्चेत् तत्र तदा मन्मानुषाणामुपरि
कृपा करणीया । उद्धृतश्चेदहं तदा जितं जितम् । एवं व्याघ्र-
१५ राजेन निगदिते आनाकेन बीटकं दत्तम् । विसृष्टोऽसौ । तद्
सर्वं सावधानतया स्तम्भान्तरितया मया श्रुतम् । राज्ञि शुद्धान्ते
गतेऽहं त्वद्धितसेवार्थमायाता । तस्मान्मा मनो मयि क्रोधकश्मलितं
कार्षीः । एतद्दासीवचः श्रुत्वा चौलुक्यनियोगी चिन्तयति— लब्धं
शत्रुगृहमर्म । यतिष्येऽत्र कार्यकरणाय । इति परामृशन् दासीम-
२० भाषत— याहि मृषाभाषिणि ! । क्व स्त्रीष्वस्ति विश्वासः[3] ।

श्रूयते यत्र शास्त्रेषु, तल्लोकेऽपि न दृश्यते ।
तत् कल्पयन्ति लोकाश्च, जल्पन्ति स्थापयन्ति च ॥१॥[4]

इत्यादि भाषित्वा तां व्यसार्क्षीत् । स्वयं तु चतुरश्चतुरो याम-
लिकानुपचौलुक्यं प्रास्थापयत् । विज्ञप्त्या चाज्ञापयत्— सावधानै-
२५ र्स्थेयम् । हा हा स्वामिपादानामुपरि शत्रुकृतं कपटं वर्तते ।
भरटकश्चिन्तनीयः । चौलुक्यः सावधानस्तस्थौ । सोमवारे गतो

१ ख–ग–'वारे ध्रुवं' । २ ग– 'कर्तिकया' । ३ पतिविदेष० । ४ अनुष्टुप् ।

राजा 'कर्णमेरु'म्। प्रकटीभूत. पूर्वोल्लचेष्टया मरटक । दृष्टमात्र-मेव स नृपो मल्लादीधरत् । कर्तिका च लब्धा । अहो व्याघ्र-राजः। जल्पितश्च– रे वराक! जल्लडकेन प्रेषितोऽसि ? । सेव-कस्त्वम् । सेवकस्य च हिताहितविचारो नास्ति । स्वाम्यादेश-वशानदस्त्व मा भैषा । मुक्तोऽसि । तमेव हनिष्यामि य एव द्रोह-　५ मात्ररति दुर्दुरूड । इत्युक्त्वा परिधाप्य व्यसृजत् । स्वय तु सौध गत्वा सामग्री योद्धीं व्यरचत् । पार्ष्णिरक्षा विधिवद् विधाय चलित । 'सपादलक्षा'न् प्रविष्ट । भट्टेन आनाकनरेन्द्रमाहील-पत् । यथा—

अये भेक! रेकी भव भवतु ते कूपकुहर　　१०
　शरण्य दुर्मेध किमु रटसि वाचाट! कटुकम् ? ।
एर सर्पो दर्पी विषमविषफूत्कारवदनो
　ललज्जिह्वो धावत्यहह भवतो जिघ्रसिषया ॥१॥

आनकोऽपि तदुद्दामशौण्डीर्यरिपुदूतवच श्रुत्वा लक्षत्रयाश्वेन नरलक्षदशकेन पञ्चाशता च मदान्धगन्धगजैश्चलत् । 'शाक-　१५ म्भरी'त पञ्चकोश्याऽर्वागागत । दिनत्रयेण युद्ध भविष्यतीति निर्णीतमुभाभ्या राजेन्द्राभ्याम् । अन्योन्यमक्षान् दीव्यन्ति राजपुत्रा । योधयन्ति मल्लयोध-च्छुरीकार-मेष-वृषभ-महिष-गजान् । स्फोट-यन्ति नालिकेराणि । तावन्तमवकाश लब्ध्वा 'सपादलक्ष'क्ष्मापालेन निशि द्रव्यव्ययेन 'नडूलीय'-'केल्हणा'दयो राजकीया'श्चौलुक्य'-　२० भक्ता भेदिता स्वपक्षे कृता । सर्वेषामेको मन्त्र — युद्धाय सन्न-द्धव्यमेव, न तु योद्धव्यम् । राजा चौलुक्य एकाकी मोचनीय । शत्रुभिर्हन्यताम् । अर्थो हि परासत्त्वयति त्रिभुवनम्।

दधाति लोभ एकैको, रक्षाक्षमेषु धुर्यताम् ।
आरक्षकक चकाश्च—पात्राणि भुवनत्रयी ॥१॥　　२५

---

१ ग–'सौध'। २ क–'विहाय'। ३ क फूत्कारवदनो'। ४ शिखरिणी। ५ ख-घ – 'प्रलक्षा नर०'। ६ अनुष्टुप्।

एत च तेषा मन्त्र चौलुक्योऽद्यापि न वेत्ति । अत प्रातः राजा कुमारपालः कलहपञ्चाननं पट्टहस्तिन महामात्रश्यामलपार्श्वात् पुर प्रेरयामास । तटस्थास्तु चेष्टितैर्दुष्टान् निरणैषीत् । नृपेण गदित श्यामल –किमर्थममी उदासीना इव दृश्यन्ते [१] । श्यामलेन
५ विज्ञप्तम्– देव ! अरिकृतार्थदानादमी त्वयि द्रोहपरा सम्पन्ना । राजाऽऽह– तर्हि तव का चेष्टा [२] । श्यामलोऽप्याललाप– देव ! एको देव १, अपरोऽहम् २, अन्यस्तु कलहपञ्चाननो हस्ती ३; एते त्रय कदापि न परावर्त्यन्ते । नृपो वदति—तर्हि सम्मुखीने दृश्यमाने शत्रुनृपमुद्गरघट्टे गज प्रेरय ।

१० साहसउत्तइ हल वह(चल [?])इ दैवह तणइ कपालि ।
खूटा विणु खींखइ नही खेडिम(डग [?]) खूटा टालि ॥१॥

तदैव चारण एको न्यगादीत्—

कुमारपाल ! मैन चित करि चिंतिइ किंपि न होइ ।
जिणि तुह रज्जु समप्पिउ चित करिसेइ सोइ ॥१॥

१५ तत् तदीय वच श्रुत्वा शुभाब्द मन्यमानः पुरस्थे महाघट्टेऽविशत् । नरसहस्रेण सह भञ्जन् अन् गतो गजारूढ कुमारपाल आनाकगजान्तिके । आस्फालितो गजो गजेन । लग्न कर करेण । आस्फालितौ दन्तौ दन्ताभ्याम् । एकदेहत्वमिव द्वयोरिभयोरभूत् । प्रवृत्त युद्ध भीमाचे । द्वावपि बलिष्ठौ महोत्साहौ राजेभौ । तथापि
२० कलहपञ्चाननश्चीत्कारान् मुञ्चन् पुनः पुन पश्चान्निवर्त्तते । तदा

---

१ साहसयुक्तेन हस वह(चल)ति दैवस्य कपाले ।
क्षुपन् विना न्नश्नाति न खर्जते [?] क्षुपान् त्यक्त्वा ॥
१३ दि ब के ह पुन इयेभि साहसवैः सुचिताच्छापा ।
२ घ–'इड्ड' । ३ ४ घ –'खूटा' । ५ ग- पुस्तके तु एवम्–
खडिम खूंटा टलि खूटा विन खीलइ नही ।
दैवह्नइ कपालि साहस उत्तइहलवइ ॥ १ ॥
६ छाया—कुमारपाल ! मा चिन्तां कुरु चिन्तया किमपि न भवति ।
येन तुभ्य राज्यं समर्पितं चिन्तां करिष्यति स एव ॥
७ ख–'मैने चित करी' । ८ ग–'रज्ज' । ९ घ–'सिंह सोइ' । १० शाहमयवाने: ।

**चौलुक्येन श्यामल** ऊचे— कथमय निवर्तते? । **श्यामलो** गदति स्म— स्वामिन्! श्रीजयसिंहदेवे विपन्ने ३० दिनानि पादुकाभ्यां राज्य कृतम् । 'मालवीय'राजपुत्रेण **चाहडकुमारेण** राज्य प्रधान-पार्श्वे याचितम् । प्रधानैस्तु परवश्यत्वान्न दत्तम् । ततो रुष्ट्वा **चाहड आनाकसेवक** सञ्जात । स मगदचन्द्रपवन्महामात्रधुर्य-, ५ अतुलबल । तस्य सिंहनादेन **कलहपञ्चाननः** क्षुभ्यन् पश्चान्निवर्तते । किमत्र क्रियते न विद्म । **चौलुक्यस्तदाकर्ण्य** द्विपटीं विदार्य फालिकद्वयेन द्वौ गजकर्णौ पूरयामास । ततश्चाहडसिंहनादमशृण्वन् **कलहपञ्चाननः** स्थिरतर स्थितो गिरिवत् । वर्तते षट्त्रिंशदायुधैर्युद्धम् । चमत्कृते द्वे अपि सैन्ये । उदासीनतया प्रथम १० स्थिता 'चौलुकीया'श्चकम्पिरे भयेन अहो एकाङ्गमात्रस्यापि **कुमार**-देवस्यासमसमरसम्पल्लम्पटत्वम्! । सैन्ययोर्युद्धमपि निवृत्तम् । तावेव युध्येते । अत्रान्तरे **चौलुक्यो** विद्युदुत्क्षिप्तकरण दत्त्वा **आनाक**गजपतिस्कन्धमारूढ । क्षितौ भुजौ राजोपरि । कसण-फानि क्षुरिकया च्छित्त्वा **आनाकं** सर्वस्वक च भूमौ पातयित्वा १५ योक्त्रबन्ध क्षिप्त्वा हृदि पाद दत्त्वा छुरीं कराग्रे गृहीत्वा अवादीत्— रे वाचाट! मूढ! निर्धर्मन्! पिशाच! स्मरसि मद्भगिन्यग्रे 'मारय मुण्डिकान्' इति वदिष्यसि । पूरयामि निजभगिनी-प्रतिज्ञाम् । छिनद्मि ते दुर्वाक्पङ्कदूषिता जिह्वाम् । इत्येव वदति कृतान्तदुष्प्रेक्ष्ये **चौलुक्ये** 'सपादलक्षीय' किञ्चिन्नोचचल्यो, केवल २० तरलतारकाभ्यां चक्षुर्भ्यामद्राक्षीत् । **चौलुक्योऽप्युत्पन्नलोकोत्तर**-करुणापरिणाम प्राभाणीत्—रे जाल्म! मुक्तोऽसि, न भगिनीपतित्वेन, किन्तु कृपापात्रत्वेन । पूर्वं तव देशे टोपीबन्धाग्रभागे जिह्विके

१ ग 'परवशत्वान्न। २ ख—'कालक०'। ३ एतन्नामार्थं दृश्यतां पद्मानन्दमहाकाव्यस्य परिशिष्ट (पृ ५८९–५९०)। ४ ग—'प्रथमस्थिता—'। ५ ख-घ—'सम्पट्टत्वम्'। ६ क—'विरुप'। ७ क—'आनाक०'। ८ 'टांचो' इति भाषायाम्। ९ क-घ—'भावस्यात्'। १० ग—'वचोऽग्र०'।

आसाताम् । कसा(शा?)या जिह्वेति सञ्ज्ञा । अत पर जिह्वाबन्ध पश्चात् करणीय , अवटोर्जिह्वाकर्षणप्रतिज्ञासिद्धिसूचकत्वात् । एव श्रुते तथेति प्रतिपेदे **आनाकः** । बलवद्भि सह का विरोधितेति न्यायात् । काष्ठपञ्जरे क्षिप्त त्रिरात्र स्वसैन्ये स्थापित । जयातोद्या-
५ नि घोषितानि । पश्चात् 'शाकम्भरी'पतिर्हितं । उत्खातप्रति-[1]रोपितमताचार्यो हि **तिहुअणपालदेवनन्दन** । गम्भीरतया स्वभटा नोपालब्धा । स्वकजीवाशास्ते त सेवन्ते । [3]मेडतक रासवार भग्नम् । 'पल्लीकोट'स्थाने आर्द्रकमुप्तम् । ततः पठित चारणेन–
[4]कुमारपाल रणहट्टि वल्लिउ कुवरि सइव वेहरगु ।
१० इक्कह पल्ली मट्टि बीसलक्खउ(?) झगडउ कियउ ॥
इति चिर तस्थौ स तत्र । श्रीहेमचन्द्रसूरय सदैव सन्ति । पृष्टास्ते तेन– भगवन् ! 'मालवीया' राजानो 'गूर्जरा'नागता प्रासादान् पातयन्ति आत्मख्यातये । तदस्माकमङ्गलम् । केनो-पायेनात्मख्यातिं कुर्म ? । श्रीहेमसूरिपादै प्रत्यपादि–राजेन्द्र !
१५ पाषाणमयानि तिलपेषणयन्त्राणि भञ्जय, पुण्यकीर्तिलाभात् । भञ्जितास्ते तेन घाणका । अद्यापि भग्ना पतिता स्थाने दृश्यन्ते । ततो यवले परराष्ट्रमर्दनः **चौलुक्यः** । आयात 'पत्तन'म् । भ्रग्नी भर्तृकुले प्रगन्तुमतत्वरत् । न तु सा गता अभिमानात् । तपस्तु तेपे । राजा 'स्तम्भन'पुरे यात्रां सूत्रयामास ।
२० तत्पुरं पार्श्वदेवाय ददौ । पुन. 'पत्तन'मैत् । गृहीत-'सपादलक्षा' धिपतिरैश्वर्यान् कुसेरकान् निगृह्य निश्चिन्तीभूत श्रीकुमार-पालः श्रीहेमसूरिपादान् पर्युपास्ते, सामायिकपौषधादीन्याचरति ।

एकदा पृष्ट राज्ञा– भगवन् ! इदमपि ज्ञायते यदह पूर्वभवे

---

१ ष-'प्रभु' । २ [illegible] घ-रोपिताचार्यो । ३ ष 'मेडंत' ।
४ ध घ– कुमारपालो रणहट्टे वलितः [illegible] ।
[illegible] पञ्चशा [illegible] [illegible] ॥
५ प 'वहुरइ' । ६ ग–' गुर्वमिदयम् । ७ 'पल्ली' इति भाषायाम् । ८ ख ग-'भगिनी' । ९ 'हाथ' इति भाषायाम् ।

कीदृशोऽभूवन्[1] । गुरुराह– राजन् ! निरतिशय कालोऽयम्, यत श्रीवीरमोक्षगमनाद् वर्षाणां चतु षष्ट्या चरमकेवली जम्बूस्वामी सिद्धिं गत । तेन सम मन पर्यवज्ञानम्, परमावधि, पुलाकलब्धि, आहारकशरीरम्, क्षपणश्रेणि, उपशमश्रेणि, जिनकल्प, परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातचारित्राणि, ५ केवलज्ञानम्, सिद्धिगमन च इति द्वादशस्थानानि 'भरत'क्षेत्रे व्युच्छिन्नानि । सप्तत्यधिके वर्षशते गते स्थूलभद्रे स्वर्गस्थे चरमाणि चत्वारि पूर्वाणि समचतुरस्रसस्थान वज्रऋषभनाराचसहनन महाप्राणध्यान व्युच्छिन्नम् । आर्यवज्रस्वामिनि दशम पूर्वं आद्यसहननचतुष्कं च व्यपगतम् । तत पर शनै शनै सर्वाणि १० पूर्वाणि प्रलय गतानि । 'सम्प्रति अल्पश्रुत वर्तते तथापि देवतादेशात् किमपि ज्ञायते । राज्ञा विज्ञसम्– यथातथा पूर्वभव ज्ञापयत माम् । गुरुभि प्रतिपन्नम् । तत 'सिद्ध'पुरे निर्जराप्ततपोध्नै. सह 'सरस्वती'तीर गत्वा विजने ध्याने निषण्णा । द्वौ मुनी दिग्रक्षाया मुक्तो । दिनत्रयान्ते 'विद्यादेव्य आजग्मु । १५ प्रभूणामग्रे ताभिरुक्तम्—यद् भवता सत्त्वेन तुष्टा स्म, याच्यता किञ्चित् । सूरिभिरभाणि– कुमारपालस्य प्राग्भव वदत । ता ऊचु – 'मेदपाट'परिसरे पर्वतश्रेण्या 'परमार'पल्लीशो जयताको नाम्यमनरोदन्यायी । एकदा धनकनकसमृद्धा वर्णीवर्दश्रेणी तेन गृहीता । वर्णीवर्दाधिपनिर्बन्ध । जयताकेन सर्वं लुण्टितम् । २० 'वर्णीवर्दा'धिपतिस्तु 'मालव'देशं गत्वा राज्ञा सह मिलित्वा सेना गृहीत्वा तस्या पल्ल्या वेष्टमकृत । धाटमारि कृता । जयताको नष्ट । तस्य भार्या(हस्ते) चटिता । तस्या उदर विदार्य पुत्र गर्भमुपटे आस्फाल्य वैणिज्यारकोऽनर्थात् । 'पल्ली'ग्रामादि प्रज्वाल्य पुन-

1 'गच्छति' इत्यधिको वा पाठ । 2 एतत्पर्यन्तमनाना प्रतिरूपर्षे च प्रेश्यता - यत्समष्टिविंशत्यचतुर्विंशतिक ॥ मदीय सङ्कलनम् । 3 'बद्ध' इति भ पाठम् । 4 'वणजारो' इति भाषायाम् ।

'मालव'देशं गतः । राज्ञा दृष्टेन पृष्टः— कथं कथं विग्रहः कृतः ? । वाणिज्यारकेणोक्तम्— स्वामिन् ! तत्पुरं प्रज्वालितम्, जयताको नष्टः, तत्पत्नी चटिता, सगर्भा हता । राज्ञोक्तम्— त्वया न शुभं कृतम् । हत्याद्वयं गृहीतम् । अदृष्टव्यमुखस्त्वं ममान्तिकं त्यज । निष्कासितः । लोकनिन्दोच्छलिता । तपोवनं गत्वा तपस्विदीक्षा जगृहे । गाढं तपस्तप्त्वा मृत्वा च वाणिज्यारको जयसिंहदेवो जातः । जयताकस्तु स्थानभ्रंशं दृष्ट्वा देशान्तरं गतः । अटवीं गच्छतस्तस्य 'पण्डेर'गच्छस्वामिनः श्रीयशोभद्रसूरयो मिलिताः । सूरिभिरभिहितम्— यद् भवतोऽधुना सर्वं गतम्, किमर्थमन्यायं करोषि ? । जयताकेनोक्तम्— 'बुभुक्षितः किं न करोति पापम् ?' । ततः सर्वमकृत्यं करोमि । सूरिभिरुक्तम्— अधुना शम्बलादिकं[1] भोजनादि कारयिष्यते । अनयं मा कृथाः । भोजनवस्त्रादिकं कस्यापि पार्श्वाद् दापितम् । सार्थे हि तदादेशकारिणो बहवः चौर्यनियमं यावज्जीवं ग्राहिताः । स 'तिलङ्गेषु 'उरङ्गल'पुरे ओढरवाणिज्यारकगृहे भोजनादिवृत्त्या भृत्योऽस्थात् । तत्र विहरन् यशोभद्रसूरयः प्राप्ताः । चतुष्पथे मिलिता जयताकस्य । श्रावकैरुपाश्रयो दत्तः । जयताकेन तत्र गत्वा हृदयशुद्ध्या पुनश्चौर्यनियमो गृहीतः, अन्येऽपि बहवो 'ग्राहिता नियमाः । उत्सूरे ओढरगृहं गतः । ओढरेण पृष्टम्— तव क वेला लग्ना ? । त्वां विना कार्याणि सीदन्ति । तेनोक्तम्— मम गुरवः समागताः सन्ति तत्क्रमकमलवन्दनानन्दमन्वभूवम् । नियमानग्रहीषम् । ओढरेणापि समुत्पन्नश्रद्धेन व्याकृतम्— वयमपि गुरून् वन्दिष्यामहे । जयताकेनोक्तम्— पुण्यात् पुण्यमिदम् । ओढरस्तत्र गतः । गुरून् वन्दित्वा न्यषदत् । देशना श्रुता । तत्त्वज्ञानमुन्मीलितम् । श्रावकत्वं गृहीतम् । पश्चाद् गुरुदक्षिणा गृह्यतामिति ओढरेणोक्ते सूरिभि-

१ घ-'शम्बलादि भोजनादि' । २ अनीतिम् । ३ ख-घ-'तिलिङ्गेषु ‘उर॰’ । ४ ग-'नियमा गृहीताः' । ५ 'लागी' इति भाषायाम् । ६ चरण॰ ।

रक्तम्— वयं निर्ममा निष्परिग्रहा धनादि न गृह्णीमः। अथ तवात्याग्रह एव तर्हि महावीरप्रसादकारापणं दक्षिणाऽस्तु। कारितः प्रासादः। ओढरस्य जयताकेन सह सोदरत्वमिवासीत्।

एकदा पर्युषणे ओढरः सपरिवारश्चलितो जयताकेन समं देवगृहं प्रति। पुष्पाणि गृहीत्वा ओढरेण देवस्य पूजा कृता, ५ जयताको जजल्पे— इमानि पुष्पाणि मे गृहीत्वा पूजां कुरु। जयताको जगाद— पुष्पाणि भवदीयानि, एभिः पूजायां कृतायां किं मे फलम्?। विपिटेर्व केवला। केवलं ममापि पञ्च वराटका सन्ति। तत्पुष्पैः पूजयिष्यामि जिनेन्द्रम्। तथैव पूजितः। जयताको पुण्यमगण्यमुपार्जयत्। तत ओढर-जयताकौ गुरून् १० वन्दितुं जग्मतुः। उपवासः कृतो जयताकेन। द्वितीयदिने मुनिभ्यो दत्त्वा पारणं कृतम्। एवं पुण्याढ्यः सन् मृत्वा श्रीमूलराजवंशे तिहुअणपालदेवगृहे श्रीकुमारपालोऽभूत्। एवमुक्त्वा विरतासु देवीषु प्रभुभिः प्रोक्तम्— कोऽत्र प्रत्ययः?। पुनर्देव्यः प्राहुः— उपराजं वदः नेवलक्षतिलङ्गशृङ्गारनगरे 'उरङ्गले' मान- १५ वान् प्रेषय। अद्यापि ओढरस्य वंशीयाः सन्ति। तेषां दासी स्थिरदेवी जीर्णवृत्तान्तान् जानाति वक्ष्यति च। इदं श्रुत्वा विसृज्य गच्छन्तीभिर्देवीभिस्तत्रत्ये ओढरगृहे लप्स्यमानानि निधानानि कथितानि। विज्ञाय 'पत्तने' राजान्तिकं गता प्रभवः। पृष्टं तत्र राज्ञा। तथैव राज्ञोऽग्रे न्यगादि। नरप्रेषणात् सर्वं ज्ञातम्। २० जिनधर्मे स्थैर्यं जातम्। सह सिद्धसेनेनापि वैरकारणमुपलब्धम्। पूर्वभवे गर्भघातात् सिद्धराजस्य पुत्रः। इति कुमारपालपूर्वभवः॥

॥ इति हेमसूरिप्रबन्धः ॥ १० ॥

---

१ ग-'तर्हि श्रीमहा०'। २ ग-'इमानि मे पुष्पाणि'। ३ 'वेठ' इति भाषायाम्। ४ ग-'वेष्टिरेव'। ५ ख-'नवलक्षनवशृङ्गार०', घ-'नवलक्षतिलिङ्ग०'। ६ 'जूना' इति भाषायाम्। ७ क-ख-'इत्युक्त्वा देव्यो गताः स्वस्वस्थानम्। पत्तने राजान्तिकं'। ८ ग-'सह सिद्धसेनापि'। ९ ग-'सन्तानम्'।

## [११]

## ॥ अथ श्रीहर्षकविप्रबन्धः ॥

पूर्वस्यां दिशि 'वाराणस्यां' पुरि **गोविन्दचन्द्रो** नाम राजा
७५० अन्तःपुरीयौवनरसपरिमलग्राही । तत्पुत्रो **जयन्तचन्द्रः** ।
५ तस्मै राज्यं दत्त्वा पिता योगं प्रपद्य परलोकमसाधयत् । **जयन्त-
चन्द्रः** सप्तयोजनशतमाना पृथ्वीं जिगाय । **मेघचन्द्रः** कुमारस्तस्य
यः सिंहनादेन सिंहानपि भङ्क्तुमलम्, किं पुनर्मदान्धगन्धेभघटाः[1] ।
तस्य राज्ञश्चलतः सैन्यं 'गङ्गा'-'यमुने' विना नाम्भसा तृप्यति ।
नदीद्वययष्टिग्रहणात् 'पङ्गुलो' राजेति लोके श्रूयते । यस्य **गोमती-**
१० दासी षष्टिसहस्रेषु वाहेषु प्रक्षरां(रं) निवेश्याभिषेणयन्ती परचक्र
त्रासयति । राज्ञः श्रम एव कः ? । तस्य राज्ञो बहवो विद्वांसः ।
तत्रैको **हीरनामा** विप्रः । तस्य नन्दनः प्राज्ञचक्रवर्ती **श्रीहर्षः** ।
सोऽद्यापि बालावस्थः । सभायां राजकीयेनैकेन पण्डितेन वादिना
**हीरो** राजसमक्षं जित्वा मुद्रितवदनः कृतः । लज्जापङ्के मग्नः । वैर
१५ बभार वैरालम् । मृत्युकाले **श्रीहर्षं** स बभाषे— वत्स ! अमुके-
न पण्डितेनाहमाहत्य राजदृष्टौ जितः । तन्मे दुःखम् । यदि
सत्पुत्रोऽसि तदा तं जयेः क्ष्मापसदसि । **श्रीहर्षे**णोक्तम्— ओमिति ।
**हीरो** द्यां गतः । श्रीहर्षस्तु कुटुम्बभारमाप्तदायादेष्वारोप्य विदेशं
गत्वा विविधाचार्यपार्श्वेऽचिरात् तर्का-ऽलङ्कार-गीत-गणित-चूडा-
२० मणि-मन्त्र-व्याकरणादीः सर्वा विद्याः सस्फुराः प्रजग्राह । 'गङ्गा-
तीरे सुगुरुदत्तं 'चिन्तामणि'मन्त्रं वर्षमप्रमत्तः साधयामास ।
प्रत्यक्षा **त्रिपुराऽभूत्** । अमोघादेशत्वादिवराप्तिः । तदादि राज-
गोष्ठीषु भ्रमति । अलौकिकोल्लेखशिखरितं जल्पं करोति यं कोऽपि
न बुध्यते, ततोऽतिविदग्धयाऽपि लोकागोचरभूतया खिन्नः । पुन-

१ ग-'अथ हर्ष०' । २ घ-'पूर्वस्यां वारा०' । ३ घ-'तृप्यतीति' । ४ तुरगसंघा-
तम्, 'पाखर' इति भाषायाम् । ५ खड्गस्य धारावत्, तीक्ष्णम् ।

भारतीं प्रत्यक्षीकृत्याभणत्—मात ! अतिप्रज्ञाऽपि दोषाय मे जाता । बुध्यमानवचनं मा कुरु । ततो देव्योक्तम्— तर्हि मध्यरात्रेऽम्भःक्लिन्ने शिरसि दधि पिब । पश्चात् स्वपिहि । कफांशावताराज्जडतालेशमाप्नुहि । तथैव कृतम् । बोध्यवागासीत् । खण्डनादिग्रन्थान् परःशताग्रन्थ्य । कृतकृत्यीभूय [1]काशीमायासीत् । ५
नगरतटे स्थितः जयन्तचन्द्रमजिज्ञपत्— अहमगीत्यागतोऽस्मि । राजाऽपि गुणस्नेहलो हीरजेतृपण्डितेन सह सचातुर्वर्ण्यं पुरीपरिसरमसरत । श्रीहर्षो नमस्कृत । तेनापि यथार्हमुचित लोकाय कृतम् राजानं त्वेनं तुष्टाव—

गोविन्दनन्दनतया च वपुःश्रिया च १०
माऽस्मिन् नृपे कुरुत कामधियं तरुण्यः ।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्रीजनः पुनरनेन विधीयते स्त्री ॥१॥[2]

व्याचख्यौ च तारस्वरं सरसविस्तरम् । तुष्टा सभा राजा च ।
पितृवैरिणं तु वादिनं दृष्ट्वा सक्रोधाक्षमाचष्टे— १५

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥१॥[3]

एतच्छ्रुत्वा स वादी प्राह— देव ! वादीन्द्र ! भारतीसिद्ध तव २०
समो कोऽपि न, [5]किं पुनरधिकः [6] ।

हिंस्रा सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धता-
स्तस्यैकस्य पुनः स्तवीमहि महः सिंहस्य विश्वोत्तरम् ।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
सहर्षो महिषैश्च यस्य मुमुचे साहङ्कृतेर्हुङ्कृते ॥१॥[7] २५

१ क–'काशामयाम'त् । २ वसन्त० । ३ घ–'चचक्षे' । ४ शार्दूल० । ५ घ–'न स्वधिक' । ६ वराह० । ७ मशोकराजे । ८ स्तवनीकेर । ९ शार्दूल० । चतुर्विंशति० १५

इद श्रुत्वा **श्रीहर्षो** निष्क्रोध इवासीत् । नृपेणोक्तम्—अत्र **श्रीहर्षे** इदमेव वक्तुमर्हम् । प्रतिवादीना कोऽर्थ १ । सम्यगवसर-मज्ञासी । **श्रीहीर**वैरिनिर्यथे । अन्योन्य गाढालिङ्गनमची करद् द्वयोरपि वसुन्धरासुधाशु । निरन्तरेण सौधमानीय माङ्गलि-
५ कानि कारयित्वा गृह प्रति प्रहित । लक्षसङ्ख्यानि हेमानि ददिरे । निश्चि तीकृत्यैकदा मुदा नृपेणोक्त कवीश – वादीन्द्र ! किञ्चित् प्रबन्धरत्न कुरु । ततो **नैषध** महाकाव्य बद्ध दिव्यरस महागूढव्यङ्ग्यभारसार राज्ञे दर्शितम् । राज्ञोचे– सुष्ठुतममिदम्, पर 'काश्मीर' व्रज । तत्रस्थपण्डितेभ्यो दर्शय । **भारतीहस्ते** च
१० मुञ्च । **भारती** च तत्र पीठे स्वय साक्षाद् वसति । असत्य प्रबन्ध हस्ते न्यस्तमवकरनिकरमिव दूरे क्षिपति, सत्य तु मूर्धधू-ननपूर्वं तुष्ट्या स्वीकरोति । उपरित पुष्पाणि पतन्ति । **श्रीहर्षो** राजदत्तार्थनिष्पन्नविपुलसामग्रीक 'काश्मीर'नगमत् । **सरस्वती**-हस्ते पुस्तक न्यास्यत् । **सरस्वत्या** दूरे क्षिप्त तत् । **श्रीहर्षेण**
१५ कथितम्— किं जरतीति विकलाऽसि य मदुक्तमपि प्रबन्धमितर-प्रबन्धमिव मन्यसे १ । **भारत्याह**— भो परमर्मभाषक ! न स्मरसि यदत्रोक्त त्वया एकादशे सर्गे चतु षष्टितमे काव्ये—

'देवी पवित्रितचतुर्भुजवामभागा
वागाल्पत् पुनरिमा गरिमाभिरामाम् ।
२० 'एतस्य निष्कृपकृपाणसनाथपाणे
पाणिग्रहादनुगृहाण गण गुणानाम्' ॥१॥'

एव मा विष्णुपत्नीतेन प्रकाश्य लोके रूढ कन्यात्व लुसवा नसि, ततो मया पुस्तक क्षिप्तम् ।

याचको यद्यको व्याधि , पद्मत्व मर्मभाषक ।
२५ योगिनामप्यमी पञ्च, प्रायेणोद्वेगहेतव ॥२॥'

---

१ घ- केवल काश्मीर ' । २ ख ध अस्यापि निष्कृप० । ३ वसन्त० । ४ अनुष्टुप् ।

इति वाग्देवीवाचं श्रुत्वा श्रीहर्षो वदति– किमर्थमेकस्मिन्नवतारे नारायणं पतिं चकृषी, त्वं पुराणेष्वपि विष्णुपत्नीति पठ्यसे। ततः 'सत्यं किमिति कुप्यसि ?'। कुपितैः किं 'छुप्यते कलङ्कात् ?'। इति श्रुत्वा स्वयं गृहीत्वा पुस्तकं हस्ते धारितम्। ग्रन्थश्च शोधितः समाप्तश्च। श्रीहर्षेण पण्डिता उल्लसितचित्ताः– ग्रन्थमत्रस्थाने राज्ञे माधवदेवनाम्ने दर्शयत। श्रीजयन्तचन्द्राय च शुद्धोऽयं ग्रन्थ इति लेखं प्रदत्त। इति श्रुतेऽपि ग्रन्थे मात्सर्यमिश्रितैः ज्ञातेऽपि ते लेखं न ददते, न भूपं दर्शयन्ति। स्थितः श्रीहर्षो बहून् मासान्। जग्धं पाथेयम्। विक्रीतं वृषभादि। निर्गमितः परिच्छदः।

एकदा तथाभूतदेहो कूपतटासन्ने देवकुले रुद्रजपं रहः करोति। तत्रागते कयोश्चिद् गृहिणोररघट्टे चेट्यौ। जलग्रहणपश्चाद्ग्रहणप्रथमभरणविषये वादे लग्ने। तयोश्चिरमुक्तिप्रत्युक्तिरभूत्। शीर्षाणि स्फुटितानि घातप्रतिघातैः। गते राजकुलम्। राजा साक्षिणं गवेषयति। उक्तं ते– अत्र कलहे कोऽपि साक्षी विद्यते न वा?। ताभ्यां जगदे–विप्र एकस्तत्रास्ते जपतत्परः। गता राजकीयाः। आनीतः श्रीहर्षः पृष्टस्तयोर्नयानयौ। श्रीहर्षेण गीर्वाणवाण्योक्तम्– देव! वैदेशिकोऽहम्। न वेद्मि निःशेषेण प्राकृतवादिन्यौ मूनः; केवलं तान् शब्दान् वेद्मि। राज्ञोक्तम्– ब्रूहि। तत्कालमस्यैव तद्भाषितप्रतिभाषितदानभिहितमनेन। राजा चमत्कृतः। अहो प्रज्ञा! अहो अवधारणा! दास्योर्वादं निर्णीय यथासम्बन्धं निग्रहानुग्रहौ कृत्वा प्रहित श्रीहर्षमपृच्छद् राजा– कस्त्वमेव नैगमिकशिरोमणिः?। श्रीहर्षेणोक्तं सर्वं कथानकं स्वम्। राजन्! पण्डितकृतदौर्जन्यात् तव पुरे दुःखी तिष्ठामि। सम्यक्पारम्पर्यज्ञो राजा पण्डितानाहूयावादीत्– धिग् मूढाः! ईदृशेऽपि रत्ने न स्निह्यथ?।

१ ख–'हन्ते किमिति०'। २ 'छुटव के' इति भवत्यत्।

वर प्रज्वलिते वह्नौ–वह्नाय निहित वपु ।
न पुनर्गुणसम्पन्ने, कृत स्वल्पोऽपि मत्सर ॥१॥[1]
वर सा निर्गुणाऽवस्था, यस्यां कोऽपि न मत्सरी ।
गुणयोगे तु वैमुख्य, प्राय सुमनसामपि ॥२॥[2]

५ तस्मात् खला यूयम् । गच्छत एत महात्मान प्रत्येक स्वगृहेषु[5] सत्कुरुत । तदा श्रीहर्षः [6]प्रागदीत्—

यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी
कुमाराणामन्त करणहरण नैव कुरुते ।
मदुक्तिश्चेतश्चेन्मदयति सुधीभूय सुधिय
१० किमस्या नाम स्यादरसपुरुषाराधनरसे [3] ॥१॥[7]

इति ईलज्जिरे पण्डिता । सर्वै गृह नीत्वा सत्कृत्यानुनीय राज्ञा च सत्कार्यैर्हि प्रहित श्रीहर्ष 'कासी(शी[8])'म् । मिलितो जयन्त चन्द्राय । उक्त सर्वम् । तुष्ट स । प्रसृत नैषधं लोके ।

अत्रान्तरे जयन्तचन्द्रस्य पद्माकरनामा प्रधाननर श्री'अण-
१५ हिल्लपत्तन' गत । तत्र सरस्तटे रजकक्षालितायां शाटिकाया केतक्यामिव मधुकरकुल निलायमान दृष्ट्वा विस्मितोऽप्राक्षीद् रज कम्— यस्या युवतेरिय शाटी ता मे दर्शय । तस्य हि मन्त्रिण-स्तत्पद्मिनीत्वे निर्णयस्थ मन । रजकेन साय गत्वा तस्मै तद्गृह नीत्वा तामर्पयित्वा तत्स्वामिनी सूहवदेविनाम्नी शालापतिपत्नी
२० विधवा यौवनस्था स्वरूपा दर्शिता । तां श्रीकुमारपालराज-पार्श्वादुपरोध्य तद्गृहान्नीत्वा सोमनाथयात्रां कृत्वा 'कासीं' गत । तां पद्मिनी जयन्तचन्द्रभोगिनीमकरोत् । सूहवदेविरिति दयातिमगात् । सा च सगर्वा विदुषीति कृत्वा 'कलाभारती'ति

१ अनुष्टुप् । २ मुद्रितग्रन्थे इत पद्य तरे । ३ पुष्पाणाम् इति पद्य तरे । ४ अनुष्टुप् । ५ क–'स्वस्वगृहेषु' । ६ घ प्रागदत्' । ७ शिखरिणी । ८ ख ग–घ–'हवित' । ९ ग– प्राग्वद् ।

पाठयति लोके । श्रीहर्षोऽपि 'नरभारती'ति पठ्यते । तस्य तत्र सहते सा मत्सरिणी ।

एकदा ससत्कारमाकारितः श्रीहर्षः । भणितश्च– त्वं कः ? । श्रीहर्षः–कलासर्वज्ञोऽहम् । राज्ञाऽभाणि– तर्हि मामुपानहौ परिधापय । को भाव ? । यदयं न वेद्मि इति भणति द्विजत्वात् तर्हि 5 अज्ञ । श्रीहर्षेणाङ्गीकृतम् । गतो निलयम् । तरुवल्कलैस्तथा तथा परिकर्मिते साय टोलाक्ष सन् दूरस्थ स्वामिनीमाजूहवत् । चर्मकारविधिनोपानहौ पर्यदीधपत् । सम्मुखेण निक्षिपन्च चर्मकारोऽहमिति वदन् । राजानमपि तत्त्वता कुत्वेद्य ज्ञापयित्वा खिन्नो 'गङ्गा'तीरे सन्यासमग्रहीत् । सा च सूहवदेविः साम्राज्येशा पुत्र- 10 मजनयत् । सोऽपि यौवनमाससाद । धीर, पर दुर्नयमय । तस्य च राज्ञो विद्याधरमन्त्री । स च चिन्तामणिविनायकप्रसादात् सर्वधातुहेमत्वकरणप्रख्यातमाहात्म्यस्पर्शपाषाणलाभात् ८८०० विप्राणा भोजन दाता, इति 'लघुयुधिष्ठिर'तया ख्यात । कुशाग्रीयप्रज्ञ । राजा त जगदे– राज्य कस्मै कुमाराय ददामि ? । मन्त्र्याह– 15 मेघचन्द्राय स्ववशाय देहि, न पुनर्धृतापुत्राय । राजा तु तया कार्मणितस्तत्पुत्रायैव दित्सति । एव विरोध उत्पन्नो मन्त्रि-राज्ञो । कपट्कयाधिन्मन्त्रिणा राज्ञीवाचमप्रमाणीकार्य भूपो मेघचन्द्रकुमाराय राज्यदानमङ्गीकारित । राज्ञी क्रुद्धा । धनाढ्यतया स्वच्छन्दतया निजप्रधाननरान् प्रेष्य 'तक्षशिला'ऽधिपति सुरत्राण 'कासी'- 20 भञ्जनाय प्रयाणे प्रयाणे सपादलक्षहेमदानेन चालित आयाति । तत् तु विद्याधरेण चरदृशा विदितम् । राज्ञे कथितम् । राजा तत्कार्मणेदिमूढ आह–ममैव वल्लभेश्वरी नैव पतिद्रोह समाचरति । मन्त्री तु वदति– राजन् ! अमुकप्रयागे तिष्ठति शाखीन्द्र । राज्ञा हक्किनो गतो गृहम् । चिन्तित च तेन— नृपस्तावन्मूढ. । 25

१ ग 'पाठते' । २ भिग्नत् । ३ ख–'दुर्नय॰' । ४ 'सुरताण' इति भाषायाम् । ५ घ–'दडमूढ' । ६ ख 'सर्वेन्द्र ।

राज्ञी बलवती, लब्धप्रसरा, अविवेकिनी । मम मरणं यदि स्वामि-
मरणादर्वाग् भवेत् तदा धन्यता । प्रातश्चलितो मन्त्री स्वसदनात्।
पथि गच्छन् [1]पिण्याकं दृष्ट्वा तमजिघ्रसिषत्। पुनः पुरो गतः।
स्फुटितचनकपिटकमालोक्य तदुदने मनोऽदधत्। तेन कुचेष्टाद्व-
५ येनात्मनो विधिवैपरीत्यं निर्णीयोपराजं गत्वा व्यज्ञपत्– देव! अहं
'गङ्गा'जले मङ्क्त्वा म्रिये, यथादिशसि । राजाऽऽख्यत्—यदि
म्रियसे तदा सुखेन जीवामः । कर्णज्वरो निवर्तते । मन्त्री दून
दुःखितवचनानाकर्णनम्, अनये धृतिः, प्रियेष्वपि द्वेषः, निज-
गुरुजनेऽप्यवज्ञा, मृत्योः किल पूर्वरूपाणि । आगतं राज्ञो मर-
१० णम् । राजानमापृच्छ्य गृहं गत्वा सर्वस्वं द्विजादिलोकाय प्रदाय
भवविरक्तो 'जाह्नवी'जलमध्यं प्रविश्य कुलपुरोहितमाह— दानं
गृहाण । विप्रेणापि करः प्रसारितः । दत्तः स्पर्शपाषाणः । तेनो
क्तम्– धिक् ते दानं यद् ग्रावाणं दत्से । इति क्रुद्धेनान्तरुदकं
चिक्षिपे । सोऽश्मा गङ्गादेव्या लले । मन्त्री जले मङ्क्त्वा मृतः ।
राजाऽनाथो जातः । सुरत्राण आयातः । नगरे भाण्डं भाण्डेन
१५ स्फुटितम् । राजा युद्धायाभिमुखमागात् । [3]८४०० एतावन्ति
निस्वानानि निजदले, परं एकस्यापि निस्वानस्वनं राजा न शृणोति।
आपृच्छ्य तटस्थान् । तैर्बभणे– म्लेच्छधनुर्ध्वानेषु मग्नानि ध्वाना-
न्तराणि । राजा हृदये[4]ऽहारयत् । ततो न ज्ञायते किं हतो गतो
मृतो वा[5] । यवनैर्लाता पूः ॥

२० ॥ इति श्रीहर्ष विद्याधर-जयचन्द्रप्रबन्धः ॥ ११ ॥



१ तिलकल्कम्, 'खोळ' इति भाषायाम् । २ क-'व्यज्ञपयत्' । ३ घ- ८४००
निस्वानस्वनं' । ४ ख ग-'हारयामास । ५ 'गङ्गानेऽपतत्' इत्यधिको ग-पाठः।

# [ १२ ]

## ॥ अथ हरिहरप्रबन्धः ॥

'श्रीहर्ष'वंशे हरिहरः गौडदेशीयः सिद्धसारस्वतः। स 'गूर्जर'-धरां प्रत्यचालीत्। अश्वशतद्वयं, मानवानां शतपञ्चकं, करभाः पञ्चाशत्। अनिवारप्रसरः 'धवलक्कक'वर्धमानमागात्। राणश्री- ५
वीरधवल-श्रीवस्तुपाल-श्रीसोमेश्वरदेवेभ्यः पृथक् पृथक् आशीर्वादं प्रागल्भ्यपट्टहस्तेन प्राहैषीत्। श्रीवस्तुपालो जहर्ष। उत्थाय वटुं सह नीत्वा श्रीवीरधवलाय पण्डितस्याशीर्वादमदीदृशत्। तद्गुणांश्चावर्णयत्। राणकेनोक्तम्– किमत्र युक्तम्? । मन्त्र्याह— देव! विस्तरेण प्रातः पण्डितस्य प्रवेशमहोत्सवः क्रियते। विपुलं १०
देयं दीयते। राणकेनोक्तम्– न्याय्यम्, ततो निवृत्तौ मन्त्रिराजश्च वटुश्च। वटुना तेनाशीर्वादः पण्डितसोमेश्वरदेवायादर्शि। कवितया तस्य मात्सर्यमदीपिष्ट। स निःश्वासमवोऽद्राक्षीत्। वटु-माभाषीदपि न। आगत उत्थाय वटुर्हरिहरान्तिकम्। उक्तं राणक-मन्त्रिणोः सौमनस्यं, सोमेश्वरस्य तु दौर्मनस्यम्। कुपितः सोमे- १५
श्वरदेवे हरिहरः। जातं प्रातः। राणकः समन्त्रिकः सचातुर्वर्ण्यः सर्वदर्पा सम्मुखो गतः। मिलितो हरिहरः। तत्र वीरधवलं प्रति—

शम्भु'र्मानस'सलिले सुरधुनी मूर्ध्ना दधानः स्थितः
  श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ। २०
मग्नः पङ्करुहे कमण्डलुगतामेनां दधद्वासिभूः–
  मन्ये वीर! तव प्रतापदहने ज्ञात्वोऽन्यतो मानिनम् ॥ १ ॥
हस्तेन शरान् त्रिलोकजिदुग्रः क्षत्रक्षये भार्गवो
  हस्तेन निशाचरेश्वरवधस्पृहो रघुमानवाः।

१ ख-'जम्पर०'। २ ग-'धवलक्कपुर०'। ३ क-'देवेभ्यः'। ४ ख-ग-'वर्धमान०'। ५ विप्रः। ६ मना। ७ हृदूंड०

दृष्टस्तेन जयद्रथप्रमथनोन्निद्रः[1] सुभद्रापतिः
दृष्टो येन रणाङ्गणे सरभसश्चौलुक्यचूडामणिः ॥२॥[2]

बटु. पृष्टः पण्डितेन—अत्र सदसि सोमेश्वरोऽस्ति न वा ? । बटुराह—स क्रोधान्नागतः । पण्डितो ज्ञात्वाऽस्यात् । जातः प्रवेशः ।
५ राणकेन दत्तं सौध-धन-कुप्य-वसन-परिजन-तुरगादि चमत्कारम्[3] । अथ मन्त्रिगृहं गतोऽसौ । गुर्वी सभा । मन्त्र्यभ्युत्थानं चक्रे । ऊचे च—

मुधा मधु मुधा सीधु, मुधा सोऽपि सुधारसः ।
आस्वादितं मनोहारि, यदि हारिहरं वचः ॥ १ ॥[4]

१० पण्डितस्तूचे—देव ! लघुभोजराज ! विचारचतुर्मुख ! सरस्वतीकण्ठाभरण ! अवधारय वयं पण्डिता., अस्माकं माता भारती, सा च त्रिभुवनचारिणी ।

एकदा भारत्या सह महेन्द्रस्य सभामगमाम । सा च 'सुधर्मा' नाम । इन्द्रः श्रीमान् । ३ कोट्यः सुराङ्गना. । ८४ सहस्राणि
१५ सामानिका । तथा

[5]द्वादशार्का वसवो[6]ऽष्टौ, विश्वेदेवास्[7]त्रयोदश ।
षट्त्रिंशत् तुषिताश्चैव, [8]षष्टिराभास्वरा अपि ॥ १ ॥[9]
षट्त्रिंशदधिके मांहा[10]—राजिकाश्च शते उभे ।

---

१ क–'निद्र' । २ शार्दूल० । ३ क- 'चमत्कारम्' । ४ अनुष्टुप् ।
५ "धाता मित्रोऽर्यमा रुद्रो, वरुणः सूर्य एव च ।
भगो विवस्वान् पूषा च, सविता दशम. स्मृतः ॥
एकादशस्तथा त्वष्टा, विष्णुर्द्वादश उच्यते ।"
६ "धरो ध्रुवश्च सोमश्च, अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च, वसवोऽष्टाविति स्मृताः" ॥
७ "वसुः सत्यः क्रतुर्दक्षः, कालः कामो धृतिः कुरुः ।
पुरूरवा माद्रेयश्च, विश्वेदेवाः प्रकीर्तिताः ॥"
८ घ–'वृन्दारकाः०' । ९ अनुष्टुप् । १० घ–'महा०' ।

रुद्रा [1]एकादशैकोन पञ्चाशद् वायवोऽपि च ॥ २ ॥[2]

चतुर्दश तु वैकुण्ठा, सुशर्माण पुनर्दश ।
साध्याश्च द्वादशेत्याद्या, प्रसिद्धा गणदेवता ॥ ३ ॥[4]

[5]एतत्समृद्धिस्वरूपं विलोक्य वयं विस्मिता स्थिताः । अहो तपःफलभोग [6]इत्यादि चिन्तयन्तो यावता स्म । अत्रान्तरे आगतस्तत्र　५
[7]कश्चन [8]तुम्बां पातयन्नाह–

---

१ "अजै-कपाद ऽहिम(र्बु)ध्न-स्त्वष्टा रुद्रश्च वीर्य्यवान् ।
त्वष्टुश्चाप्यात्मज पुत्रो, विश्वरूपो महातपा ॥
हरश्च बहुरूपश्च, त्र्यम्बकश्चापराजित ।
वृषाकपिश्च शम्भुश्च, कपर्दी रैवतस्तथा ॥
एकादशैते कथिता, रुद्रास्त्रिभुवनेश्वरा ।'

इति गरुडपुराणे षष्ठेऽध्याये । अजः, एकपाद्, अहिम(र्बु)ध्न, पिनाकी, अपराजित, त्र्यम्बक, महेश्वर, वृषाकपि, शम्भु॰, हरण, ईश्वर इति महाभारते दानधर्माधिकारे ।

२ "एकज्योतिश्च द्विज्योति–स्त्रिज्योतिर्ज्योतिरेव च ।
एकचक्रो द्विचक्रश्च, त्रिचक्रश्च महाबल ॥
इन्द्रश्च मत्यहस्यश्च, ततः प्रतिरूकृपर. ।
मितश्च सम्मितश्चैव, सुमितश्च महाबल ॥
ऋतजित् सत्यजिच्चैव, सुषेण सेनजित् तथा ।
अतिमित्रोऽनमित्रश्च पुरुमित्रोऽपराजित ॥
ऋतश्च ऋतवाहश्च, धर्ता च धरुणो ध्रुवः ।
विधारणो नाम तथा, देवदेवो महाबल ॥
ईदृक्षश्चाप्यदृक्षश्च, एते दश मिताशिन ।
प्रतिम प्रसदृक्षश्च, समरश्च महायशा ॥
धाता दुर्गो धृतिर्भीम–स्त्वभियुक्तस्त्वपात् सह ।
पुरिषंपुरनाम्योऽप्य, वाश कामो जयो विराट् ।
इत्येकोनाध्य पञ्चाशत्–मरुत पूर्वसम्भवा. ॥"

इति वह्निपुराणे गणभेदनामाध्याये ।

१-४ अनुष्टुप् । ५ ग-पुस्तके ' एतद्॰ विलोक्य ' एतदधिकम् । ६ ग-पुस्तके 'इत्यादि॰ स्म ' एतदधिकम्' । ७ ग-'कोऽपि' । ८ घ-'तुम्बामुत्त्वा' । ९ 'तूम पाडतो' इति भाषायाम् ।

तदृच श्रुत्वा लज्जितोऽसावपृच्छत्— किमेतदिति [1] । साऽपि
नटवृत्तान्तमचीकथत् —भ्रातरत्र प्रतिभूपतेर्नटवेषधराश्चरा आग-
च्छन् । यदि पल्ल्या वङ्कचूलोऽस्ति तदाऽस्माकं नृत्यं पश्यतु
इत्यभुवन् । तदा मयाऽचिन्ति— साम्प्रतं भ्राता वङ्कचूलो
नास्ति गृहे । तदा मया तत्र वेषधारिण्या नृत्यमकारि तेषां पार्श्वा- ५
त् । दानमदायि तेभ्यः । गताश्च ते स्वस्थानम् । ततो बहुनिशा-
गमनेन निद्रापरवशा तेनैव वेषेण भ्रातृजायापार्श्वे अस्वपम् ।
इति वृत्तान्तं श्रुत्वाऽतीव मनसि खेदो दध्रे तेन ।

कालक्रमेण तस्य तद्राज्यं शासतस्तत्रैव पल्ल्यां तस्यैवाचार्यस्य
शिष्यौ धर्मऋषि-धर्मदत्तनामानौ कदाचिद् वर्षारात्रमवास्थिषाताम् । १०
तत्र तयोरेकः साधुस्त्रिमासक्षपणं विदधे, द्वितीयस्तु चतुर्मासक्षपणम् ।
वङ्कचूलस्तु तद्व्रतनियमानामायतिशुभफलतामवलोक्य व्यजिज्ञपत्
—हे भदन्तौ ! मदनुकम्पया कमपि पेशलं धर्मोपदेशं दत्त,
ततस्ताभ्यां चैत्यविधापनदेशना पापनाशिनी विदधे । तेनापि
'शैराविका'पर्वतसमीपवर्तिन्यां तस्यामेव पल्ल्यां 'चर्मण्वती'सरित्तीरे १५
कारितमुच्चैस्तरं चारु चैत्यम् । स्थापितं च तत्र श्रीमन् महावीर-
बिम्बम् । तीर्थतया च रूढं तत् । तत्रायान्ति स्म चतुर्दिग्भ्यः सङ्घाः ।
कालान्तरे कश्चिन्नैगमः सभार्यः सर्वर्द्ध्या तद्यात्रायै प्रस्थितः
प्राप्तः क्रमेण 'रन्ति'नदीम् । नावमारूढौ च दम्पती चैत्यशेखरं
व्यलोकयताम् । तत्र सरभसं सौवर्णकच्चोलके कुङ्कुमचन्दन- २०
कर्पूरं प्रक्षिप्य जलं क्षेप्तुमारब्धवती नैगमगृहिणी । प्रमादात्
निपतितं तदन्तर्जलतलम् । ततोऽभाणि वणिजा—अहो इदं
कच्चोलकं नैककोटिमूल्यरत्नखचितं राज्ञा ग्रहणकेऽर्पितमासीत् ।

---

१ घ-'कथत् कथं भ्रात०' । २ 'ततो बहु' इत्यारभ्य 'परवशा पर्यन्तं पाठाधिक्यं ग-पुस्तके वर्तते । ३ ख-घ- तेन वेषेण' । ४ ग घ दत्तम्' । ५ ग शिरोना-मिदविका(?)पर्वत०', घ - किरात मदविकापर्वत० । ६ ग घ-' तत्र गा 'ऽ' ।
७ घ-'रतिनदीम्' ।

ततो राज्ञ कथं छुटितव्यम् [१]। इति चिरं विमृश्य वङ्कचूलस्य पल्लीपतेर्विज्ञापितं तत्, यथा— अस्य राजकीयवस्तुनो विचितिः कार्यताम्। तेनापि धीवर आदिष्टः तच्छोधयितुं प्राविशदन्तर्नदीम्। विचिन्वता [२]चान्तर्जलतलं दृष्टं तेन [३]हिरण्यमयरथस्थ जीवन्तस्वामि

५ श्रीपार्श्वनाथबिम्बं यावत् पश्यति स्म स बिम्बस्य हृदये तत्कच्चोलकम्। धीवरेणोक्तम्—धन्याविमौ दम्पती यद् भगवतो वक्षसि [४]घुसृणचन्द्रचन्दनाविलेपनार्हे स्थितमिदम्। ततो गृहीत्वा तदर्पितं नैगमस्य। तेनापि दत्तं तस्मै बहु द्रव्यम्। उक्तं च बिम्बस्वरूपं नाविकेन। ततो वङ्कचूलेन श्रद्धालुना तमेव प्रवेश्य

१० निष्कासितं तद् बिम्बम्। [५]कनकरथस्तु तत्रैव मुक्तः। निवेदितं हि स्वप्ने प्राग् भगवता [६]नृपते — यत्र क्षिप्ता सती पुष्पमाला गत्वा तिष्ठति तत्र बिम्बं शोध्यमिति। तदनुसारेण बिम्बमानीय समर्पितं राज्ञे वङ्कचूलाय। तेनापि स्थापितं श्रीवीरबिम्बस्य बहिर्मण्डपे, यावत् किल नव्यं चैत्यमस्मै कारयामि इत्यभिसन्धिमता। कारिते च

१५ चैत्यान्तरे यावत् तत्र स्थापनार्थमुत्थापयितुमारभन्ते राजकीयाः पुरुषास्तावद् बिम्बं नोत्तिष्ठति स्म। देवताधिष्ठानात् तत्रैव स्थितमद्यापि तथैवास्ते। धीवरेण पुनर्विज्ञप्तः पल्लीपतिः —यत् तत्र देव! मया नद्यां प्रविष्टेन बिम्बान्तरमपि दृष्टम्। तदपि बहिरा नेतुमौचितीमञ्चति। पूजारूढं हि भवति। ततः पल्लीश्वरेण पृष्टाः

२० स्थविरास्तद्—भो जानीते कोऽपि अनयोर्बिम्बयोः सविधानकम्[७]। येन सन्ति अन्तर्जलतले न्यस्ते [८]। इत्याकर्ण्यैकेन पुराविदा स्थविरेण विज्ञप्तम्—

देव! एकस्मिन्नगरे पूर्वं नृपतिरासीत्। स च परचक्रेण समुपेयुषा सार्धं योद्धुं सैन्यसमूहसन्नद्धः गतः। तस्यां

२५ महिषी च निजं सर्वस्वमेनच्च बिम्बद्वयं कनकरथस्थं विधाय

१ घ- कथम्। २ घ-'भ्रान्तर्जल०'। ३ क-घ- हिरण्मय०। ४ क्वचित्। ५ क-कनक०'। ६ क-घ-'सर्वेषां'। ७ क ग-घ-'नृपत्'। ८ घ 'तत्पूर्णमनदेन गत'

नल्दुर्गमिति कृत्वा 'चर्मणत्या' कौटिम्बिके प्रक्षिप्य स्थिता। चिरं युद्धवसतस्तस्य कोऽपि खलः किंवदन्तीमनैषीद् यदयं नृपतिस्तेन परचक्राधिपतिना व्यापादित इति। तच्छ्रुत्वा देवी तत्कौटिम्बकमाक्रम्यान्तर्नलतले प्राक्षिपत्। स्वयं च [1]परासुतामासदत्। स च नृपतिः परचक्रं निर्जित्य यावन्निजनगरमागमत् ५ तावद् देव्याः प्राचीनवृत्तमाकर्ण्य भवाद् विरक्तः पारमेश्वरीं दीक्षां कक्षीचक्रे। तत्रैकं बिम्बं देवेन नहिरानीतं पूज्यमानं चास्ति। द्वितीयमपि चेत्रिःसरति तदोपक्रम्यतामिति। तदाकर्ण्य वङ्कचूलः परमार्हतचूडामणिस्तमेव धीवरं तदानयनाय प्रावीविशत्। स च तद् बिम्बं कटीदघ्नवपुर्जलतले तिष्ठमानं वहिस्थशेषाङ्गमवेव- १० लोक्य निष्कासनोपायानमेकानकार्षीत्। न च तन्निर्गतमिति दैवतप्रभावमाकलय्य समागत्य च [2]विशामीशाय न्यवेदयत् तत्स्वरूपम्। अद्यापि तत् किल तत्रैवास्ते। श्रूयते ह्यद्यापि केनापि धीवरस्यनिरेण नौकास्तम्भे जाते तत्कारणं विचिन्वता तस्य [3]हिरण्यमयरथस्ययुगकीलिका लब्धा। तां कनकमयीं दृष्ट्वा १५ लुब्धेन तेन व्यचिन्ति यदिमं रथं क्रमात् सर्वं गृहीत्वा ऋद्धिमान् भविष्यामीति। ततश्च स रात्रौ निद्रां न लेभे। उक्तश्च केनापि अदृष्टपुरुषेण यदिमं तत्रैव विमुच्य सुखं स्वेया, नो चेत् सद्य एव त्वां हनिष्यामीति। तेन भयार्तेन तत्रैव मुक्ता युगकीलिका इत्यादि। किं न सम्भाव्यते देवताधिष्ठितेषु पदार्थेषु [4]। श्रूयते च २० सम्प्रत्यपि काले—कश्चित् म्लेच्छः पाषाणपाणिः श्रीपार्श्वनाथप्रतिमां भङ्क्तुमुपस्थितः स्तम्भितबाहुर्जातः। महति पूजाविधौ कृते सञ्जातानामयः इति।

श्रीवीरबिम्बं महत्, तदपेक्षया लघीयस्तरं श्रीपार्श्वनाथ बिम्बमिति महावीरस्यार्भकरूपोऽयं देव इति 'मेदार्थेष्ठुणा' २५

---

[1] घ-'तत्र श्रुत्वा। [2] मृदुत्वात्। [3] नृपाय। [4] क-घ-हिरण्मय°'।

इत्याख्या प्राचीकथन्। श्रीमच्चेल्लणदेवस्य महीयस्तममाहात्म्यनिधे
पुरस्ताभ्या महर्षिभ्यां सुवर्णमुकुटाम्नाय साधित । प्रकाशितश्च
भव्येभ्य । सा च 'सिंहगुहा'पल्ली कालक्रमाद् 'ढिम्पुरी'त्याख्य-
या प्रसिद्धा नगरी सञ्जाता । अद्यापि स भगवान् श्रीमहावीरः
५ [illegible] च चेल्लणपार्श्वनाथ सकलसङ्घेन तस्यामेव पुर्यां यात्रोत्सवैरा-
राध्यते इति ।

अन्यदा वङ्कचूल 'उज्जयिन्या खातपातनाय चौर्यवृत्त्या कस्यापि
श्रेष्ठिन सद्मनि गत कोलाहल श्रुत्वा चलित । ततो देवदत्ताया
गणिकाया गृह प्राविशत् । दृष्ट्वा सा कुष्ठिना सह प्रसुप्ता ।
१० ततो नि सृत्य गत श्रेष्ठिनो वेश्म । तत्रैकार्थिशोपको टेल्यके
त्रुटपतीति परुषवाग्भिर्निर्भर्त्स्य नि सारितो गेहात् पुत्र श्रेष्ठिना ।
निरराम च यामिनी । यावद् राजकुल यामीत्यचिन्तयत् तावदुज्जगाम
धामनिधि । पल्लीपतिश्च नि सृत्य नगराद् गोधा गृहीत्वा तरुतले दिन
नीत्वा पुना रात्रावागाद् राजभाण्डागाराद् बहि । गोधापुच्छे विलग्य
१५ प्राविशत् कोशम्। दृष्टो राजाग्रमहिष्या रुष्टया। पृष्टश्च—क स्त्वमिति[1]।
तेनोचे—चौर इति। तयोक्तम्— मा भैषी । मया सह सङ्गम
कुरु। सोऽवादीत्—का त्वम्[1]। साऽप्यूचे— अग्रमहिष्यहमिति ।
चौरोऽवादीत्— यद्येव तर्हि ममाम्बा भवति, अतो यामि । इति
निश्चिते तया स्वाङ्ग नखैर्विदार्य पूत्कृतिपूर्वमाहूता आरक्षका ।
२० गृहीतश्चौर । राज्ञा चानुनयार्थमागतेन तद् दृष्टम् । राज्ञोक्ता स्वपू-
रुषा — मैन गाढ बध्नीध्वमिति । ते रक्षित । प्रात पृष्ट
क्षितिभृता। तेनाप्युक्तम्— देव ! चौर्यायाहं प्रविष्ट , पश्चाद् देव-
भाण्डागारे देव्या दृष्टोऽस्मि । यावदन्यन्न कथयति तावत् तुष्टो
विदितवृत्तो नरेन्द्र स्वीकृत पुत्रतया स्थापितश्च सामन्तपदे ।
२५ देवी विडम्बयाना भक्षिता वङ्कचूलेन । अहो नियमानां शुभ
फलमिति अनवरतमयमप्यासीत् ।

---

१ पृष्टे ।

प्रेषितश्चान्यदा राज्ञा कामरूपभूपसाधनार्थं गतः । युद्धे घातैर्जर्जरितो विजित्य तमागमत् स्वस्थानम् । व्याहृताश्च राज्ञा वैद्याः । यावद् 'रोगोऽपि घातव्रणो विकसति तैरुक्तम्–देव ! काकमांसेन शोभनो भवत्ययम् । तस्य च जिनदासश्रावकेण सार्धं प्रागेव मैत्र्यमासीत् । ततस्तदानयनाय प्रेषितः पुरुषः पुरुषाधिपतिना येन तद्वाक्यात् काकमांसं भक्षयतीति । तदाऽऽहूतश्च जिनदासो 'ऽवन्ती'मागच्छन्नुभे दिव्ये सुदत्यौ रुदत्यौ अद्राक्षीत् । तेन पृष्टे–किं रुदिथः ? । ताभ्यामुक्तम्–अस्माकं भर्ता 'सौधर्मा'च्च्युतः । अतो राजपुत्रं वङ्कचूलं प्रार्थयावहे, परं त्वयि गते स मांसं भक्षयिता; ततो गन्ता दुर्गतिम्, तेन रुदिवः । तेनोक्तम्–तथा करिष्ये यथा तं भक्षयिता । गतश्च तत्र राज्ञोपरोधाद् वङ्कचूलमवोचत्– गृहाण बलिभुक्पिशितम् । पटूभूतः सन् प्रायश्चित्तं चरेः । वङ्कचूलोऽवोचत्— जानासि त्वं यदाचर्याप्यकार्यं प्रायश्चित्तं प्राह्यम् । ततः प्रागेव तदनाचरणं श्रेय इति 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति वाक्यान्निषिद्धो नृपतिः । निरोपप्रतिपन्नव्रतनिवहश्च 'ऽच्युत'कल्पमगमत् । वलमानेन जिनदासेन ते देव्यौ तथैव रुदत्यौ दृष्ट्वा प्रोक्तम्— किमिति रुदिथ ? न तावत् स मांसं प्राहितः । ताभ्यां अभिदधे– स अधिकाराधनावशा'दच्युत' प्राप्तः । ततो नाभवदस्मद्भर्तेति । एवं जिनधर्मप्रभावं सुचिरं विभाव्य जिनदासः स्वावासमाससादेति । अस्य 'ढिम्पुरी'तीर्थस्य निर्मापयिता वङ्कचूलः ।

॥ इति वङ्कचूलप्रबन्धः ॥ १६ ॥



१ ख–'रोगोऽपि' । २ काकस्य मांसम् ।

[१७]

॥ अथ विक्रमादित्यप्रबन्ध ॥

विक्रमादित्यपुत्र विक्रमसेनराजानं प्रति पुरोधसाऽऽशीर्दत्ता यत् त्वं पितुर्विक्रमादित्यादधिको भूयाः । तदा देवताधिष्ठिताभिः
५ सिंहासनस्याभितस्थितसूमि काष्ठपुत्रिकाभिर्हसितम्[1] । तदा विक्रमसेनेन पृष्टा पुत्रिका — किमिति हस्यते ? । ता प्रोचुः — तेन सह समत्वमपि न घटते, कुतो नामाधिक्यम् ? । आचाह—

'अवन्त्यां' विक्रमो राजा अपूर्वसत्यवार्त्ताकथकाय दीनारपञ्चशतीं दत्ते । एवं श्रुत्वा खर्प्परचौरेण[2] दीनारपञ्चशती याचिता ।
१० वार्ता चैका कथिता, यथा—

'गन्धवत्'[3]स्मशानसमीपे पातालविवरकूपे[4] मया दीपो, देवीहरसिद्धिप्रेषित पतन् दृष्ट । मयाऽपि तत्पृष्ठे झम्पापितम् । पाताले तत्र दिव्यं सौधं दृष्टम् । तत्र तैलकटाहिका ज्वलन्ती दृष्टा । तत्पार्श्वे एको नरो दृष्टः पृष्टश्च— किमर्थं त्वमिह ? । तेनोक्तम्—
१५ अत्र सौधे शापभ्रष्टा दिव्यकन्याऽस्ति । सा ब्रूते— यस्तैलकटाहिकायां झम्पां दाता स मे वर्षशतं पतिर्भविता । अतोऽहमेतत्पतित्वार्थमत्र तिष्ठामि, परं साहसं नास्ति । इति वार्तया पञ्चशती लब्धा । तेन खर्परेण समं राजाऽपि तत्र गतो विवरेण । तैलकटाहिकायां झम्पा दत्ता । कन्यया सोऽमृतेन जीवितः । यावत् सा
२० राजानं वृणुते तावद् राज्ञोक्तम्— अमेतन नरं वरय । वृत. स तया । एवं स परोपकारी तदधिकोऽयं कथं भावी ? ॥१॥

द्वितीयपोतम्—

१ ख-घ-'तदा चतसृभिर्राजानं विहसितं देवताधिष्ठिताभिः सिंहासनवमरि म घटते । २ ख-घ-'खर्परचौरेण । ३ ग-घ-'गन्धर्वदृश्य०' । ४ घ-पातालविवरे (!) कूपे' ।

'काशी'तो द्वौ द्विजौ आयातौ। विक्रमार्केण पृष्टौ राजस्वरूपम्। ताभ्यामूचे—अस्मद्देशे पाताल विवरमस्ति। तत्रान्धो राक्षसो[1] वर्तते। अस्मद्देशस्वामी तैलकटाहे[2] झम्पा दत्त्वा स्वमांसं राक्षसस्य पारणं कारयति स्म। राक्षसोऽपि तं पुनर्नवीकरोति। सप्त अपवरिकाः स्वर्णसम्पूर्णाश्च कुरुते। प्रत्यहं प्रातः सप्ताप्यपवरिकास्त्यागेन रिक्तीकुरुते। श्रुत्वेदं विक्रमोऽपि तत्र गतः। कटाहे[3] झम्पा दत्त्वा[4] राक्षसा भक्षितो जीवितश्च। पुनर्भक्षितो जीवितश्च। राक्षसशापेनान्ध्यमस्ति तच्छापान्तोऽभूत्[5]। दृग्भ्यां पश्यति। दृष्ट्वा चाह—कस्त्वं साहसी[6]? तेनोक्तम्—विक्रमोऽहम्। तुष्टोऽहं ते, याचस्व। राज्ञोक्तम्—तुष्टश्चेत् तदाऽस्य राज्ञो नित्यं सप्ताप्यपवरिका स्वर्णपूर्णा भूयासुः[7]। तथाऽस्य पुनरेव कटाहझम्पापातादियातना मा भूत्। राक्षसोक्तम्—एवमस्तु। अत एव विक्रमार्कादधिको भावी? समोऽपि न, अतो हसितम्[8] ॥ २ ॥

तृतीययोक्तम्—

एकदा विक्रमार्को निजपूर्वास्तव्यखन्वाटकुम्भकारयुक्तो देशान्तरं गतः। परकायप्रवेशविद्यावेदी योगी मिलितः। स आवर्जितः तुष्टश्च विद्यां दातुमारेभे। राज्ञोक्तम्—प्रथमं मम मित्रस्य (देहि)। तेनोक्तम्—न योग्योऽसौ। निर्बन्धात् तस्यापि दत्ता[9] "गुणराञ्जितेन योगिना, नृपस्य पश्चाद् बलाद् दत्ता[11]। 'अवन्तीं' गतो राजा राज्यं करोति। एकदा पट्टाश्वो मृतः। विद्यापरीक्षार्थं राज्ञा स्वजीवस्तत्र क्षिप्तः। कुम्भकारेण स्वजीवो नृपदेहे। कुम्भकारो राज्यं करोति। तेनाश्वमारणाय चिन्तितः। नृपजीवस्तु पूर्वमृतशुकदेहे प्रविष्टः। शुकोऽपि सोमदत्तश्रेष्ठिभार्याप्रोषितभर्तृका-

---

१ ग-घ- राजस्व०। २ घ- राक्षसान्ध्यमस्ति'। ३ क 'तैलकटाहे', ख घ- तैल(?)कटाहे'। ४ ग 'झम्पा दत्ता। ५ ग- राक्षसस्य शाप०'। ६ 'दृष्टोऽयम्' इत्यधिको ग-पाठ। ७ 'तुष्टश्चेद्० राज्ञा' इत्यधिको ग-पाठ। ८ ग 'हसितं'। ९ विगतकश०। १० ख मीलितः। ११ 'गुण० बलाद् दत्ता' इत्यधिको ग-पाठ.। चतुर्विंशति० २१

कामसेनागृहं गतः । सा तच्चातुर्येण हृष्टा राज्ञीसमीपं न गच्छति । श्रेष्ठी समागतः । सा राज्ञीसमीपं गता । अनागमनकारणं पृष्टा । शुकचातुर्यकारणं प्रोक्तम् । तया आनायितः शुकः । सा रञ्जिता तेन, यथा राज्ञा पूर्वम् ।

५ एकदा [1]शुकेन राज्ञीस्नेहपरीक्षार्थं गृहगोधिकादेहे [2]गतम् । राज्या तद्वियोगेन काष्ठभक्षणं कर्तुमारब्धम् । नृपजीवेन शुको जीवापितः । सा राज्ञी व्यावृत्ता । शुकेन सर्वोऽपि वृत्तान्तो राज्यै कथितः । राज्या कुम्भकारस्यावर्जना कृता । तेन कुम्भकारजीवेन तुष्टेन विद्याप्रदर्शनाय मृतस्त्रोकटदेहे स्वजीवः क्षिप्तः । नृपो निजं १० देहं गतः । अजो भयात् कम्पते । राज्ञा उक्तः—न भेतव्यम्, नाहं त्वत्समो भाषी, सकृपोऽस्मि, त्वं सुखं जीव, चर, पिब । ततः कथं तेन समो भविष्यति ? ॥ २ ॥

चतुर्थ्योक्तम्—

एकदा विक्रमार्केणोत्तमं सौधं कारितम् । राजा तत्र गतः १५ विलोकनाय । तत्र चेटकयुग्ममुपविष्टमस्ति । चेटकेनोक्तम्— सुष्ठु सौधमस्ति । चेटिकयोक्तम्—यादृशं क्षीराब्धे लीलादेव्या वास-गृहमस्ति तादृशमेतत् । राज्ञा तच्छ्रुतम् । तद्गमनौत्सुक्यं जातम् । परं स्थानं [illegible] न वेत्ति । तेन सचिन्तो जातः । भट्टमात्रो नृपाशयं ज्ञात्वा तत्स्थानकज्ञानाय चचाल । तन्मार्गे 'लवण'समुद्रं ततो २० 'घृत'समुद्रमुत्तीर्य तत्र रात्रौ मदनायतने स्थितः । [7]निशीथे हय-हेषारवसंसूचितं दिव्यालङ्कारभूषितं दिव्यस्त्रीवृन्दमागमत् । तत्स्वामिन्या कामः पूजितः । व्यावृत्यमानानां तासां अश्वपुच्छे लगित्वा

---

१ घ-'चातुर्यं कारणं' । २ घ-'शुकेन भूत्वा राज्ञा स्नेह॰' । ३ घ-'गत तद्वियोगेन' । ४ 'चोटको' इति भाषायाम् । ५ घ-'सुष्ठमस्ति' । ६ घ-'तत्र, स्थानं तु न वेत्ति, सचिन्तः भट्ट॰' । ७रात्रौ । ८ घ-'दिव्यं स्त्री॰' । ९ ख-'स्वैरमानानां' ।

तत्र गतः । दासीभिर्दृष्टः स्वामिनीपार्श्वे नीतः । तया स्नानादि कारितः । रात्रौ तद्गृह एव स्थितः । तया स्वपत्या उक्तम्—मम विक्रमादित्यो भर्ता भूयात्, किं वा यो मां चतुर्भिः शब्दैर्जागरयति । इत्युक्त्वा सुप्ता । तेन चिन्तितम्—किं चतुर्भिरपि शब्दैर्न जागर्ति तर्हि एनामहमेव जागरयिष्यामि ।[1]चत्वारः शब्दाः ५ कृताः । यदा न जागर्ति तदा पादाङ्गुष्ठक्षम्पितः । तया पादेनाहतः यत्र विक्रमादित्यः सुप्तोऽस्ति तत्र पतितः । राज्ञा पृष्टम्—किमिदम् ? । तेन सर्वोऽपि वृत्तान्तः प्रोक्तः । ततो राजाऽग्निसञ्ज्ञं वेतालमारुह्य तत्र गतः । वेतालः प्रच्छन्नो जातः । राजा दासीभिस्तत्र नीतः । तया भक्तिः कृता । तद्रूपदर्शनात् सरागा जाता, १० परं शयानया प्रतिज्ञा कृता । तथैवोक्तम् । राज्ञा दीपस्थितो वेताल उक्तः— भो प्रदीप ! कामपि कथां कथय । स वक्तुमारेभे—

कश्चिद् विप्रः । तस्य पुत्री । सा चतुर्णां वराणां दत्ता पृथक्-पृथग्ग्रामे । चत्वारोऽप्यागताः । विवादो जातः ।[3]तया महान्तमनर्थं दृष्ट्वा काष्ठभक्षणं कृतम् ।[5]स्नेहादेकेन वरेणापि चितामध्ये १५ झम्पापितम् । एकोऽस्थीनि गृहीत्वा '[6]गङ्गा'यां गतः । एकस्तत्रोटजं कृत्वा स्थितो भस्मरक्षार्थम् । एको देशान्तरं गतः । भ्रमता च तेन सञ्जीवनी विद्या शिक्षिता । पुनरपि तत्रागतः । अपरेऽप्यागताः । सा जीवापिता । पुनर्विवादो जातः । तर्हि चतुर्णां मध्ये कस्य सा पत्नी ? । राज्ञोक्तम्—अहं न वेद्मि, त्वमेव ब्रूहि । स आह— २० यश्चितायां सहोत्थितः स भ्राता । योऽस्थिनेता स पुत्रः । येन जीवापिता स पिता, उत्पत्तिहेतुत्वात् । यो भस्मरक्षकः स भर्ता, पालकत्वात् ।

---

१ 'चत्वारः' इत्यधिको ग-पाठः । २ ग-'तत्र' । ३ 'दत्ता' अस्यानन्तरं 'पृथक् पृथग् ग्रामे' इति ग-पुस्तके आधिक्यम् । ४ क-घ-'एकन सह काष्ठ०' । ५ ग-पुस्तके स्नेहादेकेन० झम्पापितम्' एतदाधिक्यम् । ६ घ-'गङ्गां गतः' । ७ घ-'वेद्मि' ।

राज्ञा ताम्बूलस्थगिका द्वितीयकथां पृष्टा। वेतालाऽधिष्ठानात् साऽप्याह—

कुत्रापि मृतभर्तृका ब्राह्मणी अभूत्। तस्या जारेण सह सुता जाता। ता रात्रौ बहिस्त्यक्तुं गता। इतश्च तत्र कोऽपि शूलाक्षिप्तो जीवन्नस्ति। तस्य पादे स्खलिता। तेनोक्तम्—क पापी दुःखिनोऽपि दुःखमुत्पादयति[१]। तयोक्तम्— किं दुःखम्[२]। सोऽप्याह—देहपीडादिकम्, विशेषतो निष्पुत्रत्वं कथितम्। पुनः शूलाग्रेणोक्तम्—त्वमपि कथय। का त्वम्[३]। निजचरितं तयोक्तम्। तन्निशम्य तेनाप्युक्तम्—पुरा हृतं भूनिक्षिप्तं अत्रस्थं द्रव्यं त्वं मदीयमादाय सुतां मया सह विवाहय। ब्राह्मणी प्राह—त्वमिदानीं मरिष्यसि, सुता च लघ्वी, कथं पुत्रोत्पत्तिः[४]। तेनोक्तम्—ऋतुकाले कस्यापि द्रव्यं दत्त्वा पुत्रमुत्पादये। तया तथैव सर्वं कृतम्। पुत्रो जातमात्रो राजद्वारे क्षिप्तः। राज्ञा केनाप्यर्पितः। कालेन निष्पुत्रस्य नृपस्य राज्ये स एवोपविष्टः। श्राद्धदिवसे 'गङ्गा'यां पिण्डदानं कर्तुं गतः। जलाद्धस्तत्रयं निर्गतम्। स राजा विस्मितः। कस्य करस्य पिण्डं ददामि[५]। तर्हि भो राजन्! वद कस्य देयः पिण्डः[६]। राज्ञोक्तम्— चोरहस्तस्य॥

राज्ञा स्वर्णपालकः जल्पितम्। तदपि कथामाह—

कस्मिन्नपि ग्रामे कश्चित् कुलपुत्रः स परिणीतोऽन्यग्रामे, परं तत्पत्नी श्वशुरगृहे नागच्छति। स स्वजनैर्निर्गुण इति हस्यते। एकदा सर्वजनप्रेरितो मित्रयुतो तत्र गतः। मार्गे यक्षस्य शिरो नामितम्। तत्प्रभावात् सादरा जाता, आगन्तुं प्रवृत्ता। यक्षभवने समीपमागते स एकाकी यक्षं नन्तुमागच्छत्। यक्षेण स्त्रीलोभेन तस्य शिरश्छेदितम्। महत्यां वेलायां मित्रमागतम्। तदवस्थो

१ 'अभूत्' इत्यधिका ग-पाठ। २ 'तन्निशम्य' इत्यधिको ग पाठ। ३ ग-'कर्तुः गतः जला०'। ४ ग 'पालकः'। ५ ग-'गृहं नागच्छति'। ६ ख घ-'यक्ष समीप०'।

जातो धनिको दृष्टः । चिन्तितं च तेन– जनप्रवादो भविष्यति
यथाऽनेन स्त्रीहेतोर्हतः, तर्हि ममापि मर्तुं युक्तम् । इति विचिन्त्य
तेनापि स्वशिरश्छिन्नम् । महति वेलायां साऽभ्यागता । द्वावपि
तदवस्थौ प्रेक्ष्य चिन्तितं तया– जनोऽग्रेऽपि द्वेषिणीं कथयन्नास्ति,
सम्प्रति पतिघातिनीं कथयिष्यति, तर्हि म्रियेऽहम् । इति ध्यात्वा ५
गले शस्त्रिका लगापिता । तावता यक्षेण करे धृता । मा साहसं
कुरु । तयोक्तम्– द्वावपि जीवापय । यक्षेणोक्तम्– शिरसी निज-
निजकबन्धे योजय । तयोत्सुकयाऽन्यान्यकबन्धयोर्न्यस्ते । तौ
भार्याविवादे जातः । एको वदति–मदीया द्वितीयोऽपि तथा । तर्हि
कस्य सा? । राज्ञोक्तम्– यस्य कबन्धे शिरः स भर्ता, 'सर्वस्य १०
गात्रस्य शिरः प्रधानम्' इति वचनात् ॥

कर्पूरसमुद्गकोऽपि कथामाह–

कुतोऽपि ग्रामात् स्वस्वकलानिदर्शनार्थं सुहृदो देशान्तरं
चेलुः, एकः काष्ठसूत्रधारः, द्वितीयः स्वर्णकारः, तृतीयः शाला-
पतिः, तुर्यो विप्रः । क्वापि वने रात्रावुषिताः । प्रथमयामे सूत्रधारः १५
प्राहरिकः स्थितः । तेन काष्ठपुत्रिका तरुणीसदृशी कृता सममाऽपि ।
द्वितीयप्रहरे स्वर्णकारो यामिकः । तेनाभरणैर्विभूषिता । तृतीये
शालापतिः । तेन क्षौमाणि परिधापिता । चतुर्थे विप्रेण सजीवा
कृता । प्रातः सचेतनां दृष्ट्वा सर्वेऽपि तज्जिघृक्षया मिथो विवदन्ते ।
तर्हि कस्य सा भो विक्रमादित्यनरेन्द्र[1] । सा नाम श्रुत्वा चुक्षोभ । २०
राज्ञोक्तम्– तदयं न वक्ति तयोः कथयतोश्च तया जल्पितम्–
भो राजन् ! कस्य सा? । राज्ञोक्तम्– स्वर्णकारस्य । अधुनाऽपि
यः स्वर्णं घटापयति स एव भर्ता भवति ॥ ४ ॥

ता पप्रच्छ– के यूयम्[2] । दीपस्थेन वेतालेनोक्तम्–असौ स
विक्रमादित्यः । सा हृष्टा व्यूढा च । तां गृहीत्वाऽवन्तीमा- २५

---

१ इति विचिन्त्य ' इत्यधिकः ग-पाठः । २ क ख घ– दद्द न वदि' ।

गमत् । यदीदृग् तत्समक्ष॰, आधिक्ये तु का कथेति हसितम् । **विक्रमसेनेन** गर्वस्त्यक्त ॥

ततो **विक्रमसेन** पुरोधसमप्राक्षीत्— यदि किल एताः काष्ठपुत्रिका मम पितरमद्भुतगुण वर्णयन्ति तर्हि स एव लोके तत्प्रथमतयोत्तमत्वेनावतीर्णो भविष्यति । तत प्राक् तु न कोऽपि तादृगुत्तमोऽभूदिति ब्रूम । पुरोधा प्राह— राजन् ! अनादिरियं रत्नगर्भा । अनादिश्चतुर्युगी । युगे युगे नररत्नानि जायन्ते । अहमेव प्रधानमिति गर्वो न हितकारी, न च निर्वहते । यतस्त्वत्पितुर्विक्रमादित्यस्य मनस्येकदा एवमभूद् यथा **रामेण** व्यवहृत्य लोक सुखीकृत तथाऽहमपि करिष्ये । ततो **रामायणं** व्याख्यापितम् । तत्र यथा **रामस्य** दान आगारस्थापन वर्णाश्रमव्यवस्था गुरुभक्तिस्तथा सर्वमारब्धम् । ततो 'ऽभिनवो राम' इत्यात्मान पाठयति । तद् दृष्ट्वा मन्त्रिभिश्चिन्त्यते स्म— अनुचितकारी अस्मत्प्रभुर्यो गर्वादात्मान तद्वन्मन्यते । अथ गर्वोऽस्योपायेनोत्तारयितव्य प्रस्तावे ।

इतश्च त्वत्पित्रा **विक्रमादित्येन** पृष्टम्— लोके स कोऽपि वास्त्यास्ते योऽश्रुतपूर्वं **रामस्याचरण** ज्ञापयति न ? । तत एकेन ज्यायसा मन्त्रिणाऽपरमन्त्रिप्रेरितेन कथितम्— राजेन्द्र ! 'कोशला'यां विप्र एको वृद्धोऽस्ति । स काश्चित् श्रीरामस्य वार्ता पारम्पर्यायाता सम्यग् विवेद । आहूय पृच्छयते । राज्ञा आहूतः स । सर्गाऽयमायातः पूजितः पृष्टः—विप्र ! वद काञ्चिद् **रामकथां** नव्याम् । विप्रो बभाण— पृथ्वीनाथ ! यदि 'कोशला'यामागच्छसि तदा **रामस्य** कथां प्रत्यक्ष साक्षाद् दर्शयामि । इह स्थितस्तु वक्तुं न पारयामि । तदा राज्ञा राज्यभारो मन्त्रिषु न्यस्त । स्वयं महाचमूपरिवृतो वृद्धद्विजयुत 'अयोध्या'पुरासन्नो ययौ । स्कन्धावारस्तस्थौ । तदानीं स एव सर्वदिगीश इत्यर्थी विप्रो भाषितो दयापाठेन—

१ ख ग घ प्रतिषु 'अथानन्तर 'इति श्रीविक्रमप्रबन्धः' एतदधिकपदम् । २ ग यथा तथा । ३ ख- तथाऽभिनवः । ४ ख घ—चैव । ५ ग 'पृष्ट एष ! वद'।

दर्शय रामदेवचरित्रम्। ततो विप्र स्थानमेकं दर्शयित्वा भूपाल-मालपत्— इदं भूखण्डं खानयत। तत खानयति क्ष्मापाल। खनयत्सु खनकेषु प्रथमं हेमकलशः। ततो हैमी मण्डपिका प्रकटीनभूव। उपरितनं रजोऽपसारितम्। पश्चानुपूर्व्या प्रथमद्वितीय-तृतीयक्षणा हैमा दृष्टा महीभुजा। चतुर्थे क्षणे नीरजे कुले [1]विपुले उपानदेका हैमसूत्रकृता ज्योतिर्जालजटामाणिक्यखचिता दृष्टा। भूपेन विस्मितेन च गृहीत्वा हृदि शिरसि निहिता। अहो मान्या रत्नजातिरियम्!। ततो विप्रेण विज्ञप्तम्— देव! चर्मकारपत्न्या उपानदेषा न स्पष्टुमर्हति नरः विप्रपत्ने। विक्रमेणोक्तम्— सा चर्मकार्यपि धन्या यस्या ईदृगुपानत्। वद केयं [2]रेखा?[3]। ततो विप्रो ब्रूते— विश्वेश्वर! श्रीरामे राज्यं कुर्वति सति अत्र चर्मकार-सदनादि आसन्। इदमेकस्य चर्मकारस्य सदनम्। तस्य पत्नी [4]लाडबहुला। अतो गर्वमुद्वहति। विनयं न करोति। ततः सा तेन हक्किता हता च। याहि रे दुःख गृहीत्वा इत्युक्ता च। ततो रुष्टाऽस्यामेकस्या उपानहि तटपतिताया अपरिहिताया द्वितीयस्या तु परिहितायां निजतातस्य सदनं जगाम। गत्वा पत्युः कठोर-भाषितं पित्रे बभाण। पित्रा दिनद्वयं स्थापिता आवर्जिता च। अपोक्ता— वत्से! कुलस्त्रियाः पतिरेव शरणम्। तत्रैव याहि। प्रोचे— न यामि, मानक्षयात्। द्वित्रिरुक्तिप्रत्युक्तयो भणिता। पितृभ्यां भणिताऽपि यदा पतिगृहं न याति तदा पित्रा भाषितम्— वत्से! अहमेव भये— यदा श्रीरामः सीता लक्ष्मणसहितः स्वय-मत्रागत्यानुनीय त्वां श्वशुरकुले प्रहिता तदा तत्र गन्त्री त्वम्। साप्यलीकाभिमानिनी प्रवदनि— इदमित्थमेव, रामः प्रवाचने यामि तत्र, नापरथा। इमं वृत्तान्तं चरत्वनियुक्ता प्रच्छन्ना सुरा गत्वा रामं व्यजिज्ञपत्— देव! अयं वृत्तान्तश्चर्मकारपुत्र्या। ततो देव

[1] घ-'उपरि हम०'। [2] ख ग घ 'विपुले रुपा०'। [3] घ 'कथा'। [4] 'बहु लाडक' इति भाषायाम्। [5] ग अतः क्व ले मा।

श्रीरामः प्रजावत्सलः प्रातः ससीतः सलक्ष्मणः सामात्यस्तच्चर्मकारभवनमगात्। तन्मध्यं प्रविष्टः। पूजितः 'कारुभिर्विस्मितैः। विज्ञप्तश्च– देव! अयमस्मान् कीटान् प्रति कियान् प्रसादः कृतः? । स्वप्नेऽपि नेदं सम्भाव्यते यद् देवोऽस्माननुपतिष्ठते। किं
५ कारणमागमनस्य? । श्रीरामः प्राह– त्वत्पुत्र्याः श्वशुरकुले प्रेषणायायाताः स्मः। तस्या हि वराक्यास्तथाविधा सन्धाऽऽस्ते। ततो हृष्टस्तज्जनकः अपवरके गत्वा दुहितरमाह स्म– मुग्धिके! तव प्रतिज्ञा पूर्णा। श्रीरामदेवोऽप्यायातः सदेवीकः। एहि, वन्दस्व तं जगत्पतिम्। ततस्तुष्टा रामान्तिकमागता। ववन्दे तम्।
१० आलापिता प्रजातातेन– वत्से! गच्छ श्वशुरमन्दिरम्। तया भाणितम्– आदेशः प्रमाणम्। ततो गता पतिगृहम्। रामः स्वस्थानमायासीत्। श्रीविक्रम! अस्या द्वितीया उपानत् तत्र पितृगृहे खन्यमाने लप्स्यते। स्वामिन्! आयाहि तद् खान्यते। गतो राजा तत्र। खानितं तद्। लब्धा द्वितीयाऽप्युपानत्। इदं हैमं गृहम्।
१५ एवमन्यान्यपि तेन विप्रेण खानयितानि स्थानं तदेव। राज्ञा विप्रः पृष्टः– विप्र! कथमीदृशं सम्यग् जानासि? । विप्रेण गदितम्– पूर्वजपारम्पर्योपदेशाज्ज्ञातं तुभ्यमुक्तं च। परं गर्वं मा धाः। स रामः स एव। तस्य द्वौश्चया जलस्थलनी स्तम्भेते स्म। पतन्तो भिक्षवो दशायां तदाज्ञायां न पेतुः। द्वा द्विचत्वारिंशत् अन्य-
२० गदा, सप्तविंशति स्फोटिका अष्टोत्तरशत विड्वराणि दोपाश्च सर्वे व्यनेशन्। यः तु तद्देवी सीता ये त्रयस्तद्भ्रातरो ये तद्भृत्या हनुमत्-सुग्रीवादयस्तेषां महिमानं वर्षशतेनापि वाक्पतिरपि वक्तुं न शक्तः। इति श्रुत्वा विक्रमेण गर्वो मुक्तः। बिरुदं निषिद्धम्– 'अभिनवरामः' इति। पुनरुज्जयिनीमागात्। यथाशक्ति लोक-
२५ मुद्धरत्। तस्य हि अग्निवेतालपुरुषसिद्धिभ्यां सुवर्णसिद्धया

१ ख 'चर्मकार०'। २ ग-सामविस्त'। ३ ख-'स्वाज्ञया'।

चोपकारैश्चर्यं तदा निरुपममासीत् ततो विक्रमो धन्य एव। ततोऽधिकास्तु परःकोटयोऽभूवन्। इत्याकर्ण्य विक्रमसेनो विवेकी अभूत्॥

॥ इति विक्रमादित्यप्रबन्धः ॥ १७ ॥

[1]अथ विक्रमचरित्रम्। ५

जैनतत्त्ववाद्यमुग्धजनचित्रमात्रफलं विक्रमादित्यप्रबन्धैनेक भूमः। 'उज्जयिन्यां' राज्यं शासति विक्रमादित्ये [2]आसन्ने ग्रामे विप्रेणैकेन हलं [3]खेडयता दिव्यं रत्नोनिष्पद्यत्नेकं भूमौ पतितं जगृहे। तन्मूल्यप्रश्नार्थं 'उज्जयिन्यां' रत्नपरीक्षिजनपार्श्वमागमत्। दर्शितं तद् रत्नम्। तैस्तेनाने उक्तं —न वयमस्य रत्नस्य १० मूल्यकरणे क्षमा, ईदृगस्य पूर्वमदृष्टत्वात् अर्घेतमूल्यकरणे तीव्रदोषाच्च, केवलं देवः श्रीविक्रमादित्यो यदि वेत्ति मूल्यमस्य, स हि रेखाप्राप्तो रत्नमूल्यज्ञाने। विप्र उपविक्रमं जगाम। रत्नमदीदृशत्। विक्रमेण पृष्टम्—क्व प्राप्तमिदम्?। विप्रेणोक्तम्— देव! हलं खेडयता स्वक्षेत्रभूमौ लब्धम्। राज्ञा भणितम्—तर्हि दिन- १५ द्वयेन वक्ष्यामः। रत्नमत्रैवास्तु एवास्तु विप्र! मा भैः, न वयं परधनग्रहाभिलाषाः। धीरां दत्त्वा स्वसौधमस्थ एव स्थापितः सः।

अथ रात्रौ विक्रमेण विमृष्टा रत्नपरीक्षका- मनाग्। बलिमनु स च पाताले। तत्रापि गन्तव्यम्। कुतूहली साहसी न भवेत्। ततोऽग्निवैतालमाराध्य पाताले गतः बलिभुवनद्वारेऽस्थात्। तत्र २० नारायणो द्वाःस्थः प्रणतः। नारायणेन पृष्टम्— किं कार्यं तेऽत्रागमने?। विक्रमेणोक्तम्—उपबलि गत्वा विज्ञापय राजा कार्यगौरवादायातोऽस्ति। यद्यादेशः स्यात् तदा दर्शनं लभेत। गतः कृष्णः। उक्तं बलेः—राजा समागतोऽस्ति द्वारे। बलिना निवेदितम्— राजा चेद् युधिष्ठिरः?। पृच्छ कृष्ण!। गतः कृष्णः पप्रच्छ— २५

---

१ इदं चरित्रं मुद्रित-पुस्तके। २ ख—'आसन्नस्थाने'। ३ 'खेडयता' इति भाषायाम्।

किं युधिष्ठिरोऽसि ? । विक्रमेणोक्तम्– राजानं युधिष्ठिरं मन्यते स, तस्मादन्यद् वक्तव्यम् । गच्छ कृष्ण ! मण्डलीक आगतोऽस्तीति वद । गतः सः । विज्ञप्तं तत् । बलिरूचे– मण्डलीकः किं रावणः ? । पुनरागतः कृष्णः । मण्डलीकश्चेत् किं रावण इति पृष्टोऽसि । विक्रमेणाभाणि– तर्हि गत्वा वद कुमार आगतोऽस्ति । गत्वा तथोक्तम् । बलिराह–किं कार्तिकेयः ? किंवा लक्ष्मणः ? किंवा पातालवासी नागपुत्रो धवलचन्द्रः ? किं वालिपुत्रोऽङ्गदो रामदूत इति ख्यातः ? । पुनरेहिरेयाहिरा कृष्णस्य । विक्रमेण पुनरभाणि–वदेस्त्वं वण्ठ आयातोऽस्ति । पुनर्गतः । बलिर्भणति– वण्ठश्चेत् किं हनूमान् ? । पुनः कृष्णो व्याघुटितः । भणितं बलिवचः । पुनर्विक्रमः प्रोचे–गत्वा वद तलारक्ष आगतोऽस्ति । उक्तं तेन तत् तथा तत् । बलिर्जगाद–किं विक्रमकः ? । कृष्णेनैत्य पृष्टम्– किं विक्रमादित्यः ? । ओमित्युक्तम् । बल्यादेशादुपबलि नीतः । पृष्टो बलिना– रे विक्रम ! रत्नमूल्य प्रष्टुमागतोऽसि ? । विक्रमादित्यो वदति–इत्थमेव । दर्शितं रत्नम् । बलिर्भाण–ईदृशानि अष्टाशीतिं सहस्राणि रत्नानि नित्य युधिष्ठिरो निर्मूल्यानि अदत्त पात्रेभ्यः । तेषां मध्यादिदं अग(ग ?)त्वत् । निप्रेण लब्धम् । प्रायो भूमि गतानि सर्वाणि रत्नानि, कालस्य बहुत्वात् । ततो राजा युधिष्ठिर एव, त्वं क ? । विक्रमेणोक्तम्–देव ! मयमेतत् 'तुष्ट इच्छामि ईदृक्सम्पत्तिर्युधिष्ठिरस्य कुतः ? । बलिराह–दिग्जयधनानि तस्मै भ्रातृभिश्चतुर्भिराहृतानि । पूर्वं 'मरु(द)त्तनामा कार्पटिको दारिद्र्यभग्नो रुद्रमाराराध । तेन तुष्टेन तस्मै स्वनाम्न्या 'फगवा'मता आम्रचूल हेमरत्नमयी पूर्निष्पाद्य दत्ता । सा तेन भुक्ता । तस्मिन् मृते रुद्रेण पांशुवृष्ट्या सा निदधे । यदा युधिष्ठिरबान्धवः सहदेव उत्तरां दिशं साध-

---

१ प 'गच्छ वद' । २ प्र-'सैवेदं दर्शितं' । ३ प-'तत्पृच्छा(?)मि ईदृक्' ।
४ प-'धवमकुलनामा' ।

यितुमुपतस्थे तदा रुद्रस्ता पुरं स्वैर्गुणैरुद्धाव्य सर्गो तद्धेमादि-
निर्भूतिं युधिष्ठिरगृहप्रतिष्ठामचीकरत् । ततो युधिष्ठिरस्य दाने-
च्छासिद्धिः । ततः स राजा । मण्डलीकस्तु रावण इति लोके
तादृग्बलविद्यादर्पायोगात् । कुमारस्तु कार्तिकेयो वक्तु युक्तः
सप्ताहवयाः सन् यस्तारकं जघान । लक्ष्मणोऽपि कुमारः यो ५
मेघनादं ममर्द । तथा धवलचन्द्रोऽपि पीहुलिपुत्रः कुमारो यो
निमेषेण जगद् हर्तुं(न्तु ?) क्षमः । विषममपि विषममृततां नेतुं समर्थः ।
अङ्गदोऽपि समर्थः ।

सन्धौ वा विग्रहे वाऽपि, मयि दूते दशाननी ।
अक्षिता वा क्षिता वाऽपि, क्षितिपीठे लुठिष्यति ॥ १ ॥ १०

इत्यादि ख्यातश्च कण्ठस्तु सत्यो हनूमान् यः स्वामिनं रामं
प्रियावियोगज्वरजर्जराङ्गं सन्धीरयामास सत्येसमम् ।

देवाज्ञापय किं करोमि ? किमहं 'लङ्का'मिहैवानये ?
'जम्बू'द्वीपमितो नये ? किमपरा वारानिधिं शोषये ? ।
हेलोत्पाटित'विन्ध्य'पर्वतहिमस्वर्णत्रिकूटाचल—
क्षेपक्षोभविवर्धमानसलिलं बध्नामि वा वारिधिम् ? ॥१॥[३] १५

इत्यादि चमत्कारिस्वामिकार्यसिद्धिसारतया कण्ठो हनूमानेव ।
तलारक्षस्तु भवसि । गरुडः मूल्यं नास्ति रत्नस्येति द्विजाय ददे ।
तदाकर्ण्य विक्रमः स्वपुरीं ययौ । रत्नं दत्त्वा तेऽत्युक्तमुक्त्वा स्वभागाय
विप्रं विसृष्टवान् । चिरं राज्यं चक्रे । २०

इति विक्रमार्कः ॥ ग्रन्थ १४० ॥



१ इन्द्रजिनम् । २ अनुष्टु० । ३ शार्दूल० ।

## [ १८ ]

## ॥ अथ नागार्जुनप्रबन्धः ॥

'ढेङ्क'पर्वते 'सुराष्ट्रा(ष्ट्र)'भूषण'शत्रुञ्जय'गिरिशिखरैकदेशरूपे राजपुत्ररणसिंहस्य भोपालनाम्नीं पुत्रीं रूपलावण्यसम्पूर्णां पश्यतो
५ जातानुरागस्य सेवमानस्य वासुकिनागस्य पुत्रो नागार्जुननामा जातः । स च जनकेन पुत्रस्नेहमोहितेन सर्वासां महौषधीनां फलानि मूलानि दलानि च भोजितः । तत्प्रभावेन स महासिद्धिभिरलङ्कृतः । सिद्धपुरुष इति विख्यातः । पृथ्वीं विचरन् 'पृथ्वीस्थान'पत्तने सातवाहनस्य राज्ञः कलागुरुर्जातः । स च गगनगामिनीविद्या-
१० ध्ययनार्थं 'पालित्तानक'पुरे श्रीपादलिप्ताचार्यान् सेवते । अन्यदा भोजनावसरे पादप्रलेपबलेन तान् गगने उत्पतितान् पश्यति । 'अष्टापदा'दितीर्थानि नमस्कृत्य स्वस्थानमुपागतानां तेषां पादौ प्रक्षाल्य सप्तोत्तरशतमहौषधीनां आस्वादेन वर्णगन्धादिभिर्नामानि निश्चित्य गुरूपदेशं विनाऽपि पादलेपं कृत्वा कुर्कुटपोत इवोत्पतन्न-
१५ वटतटे निपतितः । व्रणजर्जरिताङ्गो गुरुभिः पृष्टः – किमेतदिति[१] । तेन यथास्थितं प्रोक्तं तस्य कौशल्येन चमत्कृतचित्ता आचार्यास्तस्य शिरसि पद्महस्तं दत्त्वा भणन्ति– पष्टिकतन्दुलोदकेन तान्यौषधानि वर्तयित्वा पादलेपं कृत्वा गगने गरुड इव स्वैरं भ्रम । ततस्तां सिद्धिं प्राप्य परितुष्टोऽसौ ननर्त । पुनरपि कदाचिद् गुरुमुखाद्
२० वर्णयति यथा रससिद्धिं विना दारिद्र्यासिद्धिर्न भवति । ततो रसं परिकर्मयितुं प्रवृत्तः स्वेदन-मर्दन-जारण-मारणानि चक्रे । रसस्तु स्थैर्यं न बध्नाति । ततस्तु गुरून् पप्रच्छ कथं रस(स) स्थैर्यमाप्नोति[१] । गुरवः प्राहुः, यथा दुर्दैवतरितस्य समर्थायाः श्रीपार्श्व-

१ ख इङ्ग०' । २ ख– 'गा प्रविद्या०' । ३ ख' मा तिष्ठ' । ४ ख 'पादस्य' ।
५ ख– 'भ्रम । ६ ख– प्रतिष्ठऽसौ ।

नाथस्य दृशि साध्यमानः सर्वलक्षणोपलक्षितया महासत्या योषिता च मृद्यमानो रसः स्थिरीभूय कोटिवेधी भवति। तच्छ्रुत्वा स पार्श्वनाथप्रतिमां समहिमामन्वेषयितुमारेभे। परं तादृशीं न क्वापि पश्यति।

इतश्च नागार्जुनेन स्वपिता वासुकिर्ध्यात्वा प्रत्यक्षीकृतः, ५ पृष्टश्च– श्रीपार्श्वनाथस्य दिव्यस्त्वातिशया प्रतिमा कथय। तेनाचोचि– 'द्वारवत्यां' समुद्रविजयदशार्हेण श्रीनेमिनाथमुखान्महातिशयसम्पन्नां ज्ञात्वा श्रीपार्श्वस्य प्रतिमा प्रासादे स्थापयित्वा पूजिता। 'द्वारवत्यां' दाहान्तरं समुद्रेण प्लाविता सा प्रतिमा तथैव समुद्रमध्ये स्थिता। कालेन 'कान्ती'वासिनो धनपतिनामकस्य १० सायात्रिकस्य यानपात्रं देवताऽतिशयात् स्खलितम्। अत्र जिनबिम्बं तिष्ठतीत्यदृश्यवाचा निश्चित्य नाविकास्तत्र निक्षिप्य सप्तभिरामसूत्रतन्तुभिर्बद्ध्वोद्धृता प्रतिमा निजनगर्यां नीत्वा प्रासादे स्थापिता। चिन्तितातिरिक्तलाभप्रहृष्टेन पूज्यते स्म प्रतिदिनम्। ततः सर्वातिशायि तद् बिम्बं ज्ञात्वा नागार्जुनो रससिद्धिनिमित्तमपहृत्य 'सेडी'नदीतटेऽतिष्ठिपत्। तस्य पुरतो रससाधनार्थं सात- १५ वाहनस्य राज्ञश्चन्द्रलेखाभिधां महासतीं देवीं [1]सिद्धव्यन्तरसान्निध्येनानाय्य प्रतिनिशं रसमर्दनं कारयति। एवं तत्र भूयो भूयो गतागतेन तया न्यन्धन इति प्रतिपदेऽसौ। सा तेषामौषधानां मर्दनकारणं पृच्छति। स च कोटिवेधरसस्य वृत्तान्तं सत्यं २० कथयति। अन्यदा द्वयोर्निजपुत्रयोस्तया निवेदितम्, यथा– 'सेडी'-नदीतटे नागार्जुनस्य रससिद्धिर्भविष्यति। तौ रसलुब्धौ निजराज्यं मुक्त्वा नागार्जुनान्तिकमागतौ। वेषान्तरेण तं रसं जिघृक्षू प्रच्छन्नवेषौ यत्र नागार्जुनो जेमति तस्य गृहस्य परिसरे भ्रमतः।

---

[1] 'पृ० पङ्क्ति' इत्यधिकः क-पाठः। २ ख-'सन्धान(०'।

रैन्धनीमाऽपत — त्व नागार्जुनाय रसवतीं लवणबहुलां कुर्याः ।
यदा ता रसवतीं क्षारां कथयति तदाऽस्मभ्यं वदेः[1] । साऽप्योमिति
प्रतिशुश्राव । अथ सा तज्ज्ञानार्थं तदर्थं सलवणां रसवतीं साध-
यति । षण्मास्यामतिक्रान्तायां रसवतीं तेन क्षारेति दूषिता ।
५ रन्धन्या च राजपुत्रयोरग्रे गदितम्— अद्य क्षारत्वं जज्ञे नागार्जुनेन ।
ताभ्यामपि तस्य रससिद्धिर्निश्चिक्ये । अथ तौ तस्य वधोपाय
ध्यायतः पृच्छतश्च लोकं तज्ज्ञम् । पृच्छद्भ्यां ज्ञातम्, यथा—
वासुकिना एवास्य दर्भाङ्कुरान्मृत्युः कथितोऽस्ति । नागार्जुनेन
सिद्धस्य शुद्धस्य रसस्य कुतपौ द्वौ भृतौ 'ढङ्क'पर्वतस्य गुहायां
१० क्षिप्तौ । पृष्ठचराभ्यां ताभ्यां ज्ञातौ । मुक्त्वा पल्मानो नागार्जुन-
स्ताभ्यां सम्मुखस्थो दर्भाङ्कुरेण जघ्ने । मृतः सद्यः ।

आलेख्ये चित्रपतिते, मृते च मधुसूदन ! ।
क्षत्रिये निपु निश्वास-श्चतुर्थो नोपलभ्यते ॥१॥[3]

तौ कुतपौ देवतया सङ्गृहीतौ । राजपुत्रौ नरकपङ्कगोचरतां
१५ गतौ । देवतया क्रुद्धया हतौ । न रसलाभो, न च धर्मस्तयोः ।
तावपि राजपुत्रौ मरणकाले पश्चात्तापेन दध्यौ — हा हा येन
स्फटिकासिद्धिवशाद् दशार्हमण्डपादिकीर्तनानि 'रैवतो'पत्यकायां कृ-
तानि येन रसो लोकोपकाराय साधितः तस्य प्राणद्रोहेणावाभ्यां
किं साधितम्[4] । एकं तावत् कष्टपात्रद्रोहः, अपरं च मातुर्द्र-
२० द्रोहः । एवं तु स्वार्नौ मृतौ । रसस्तम्भनात् 'स्तम्भन' नाम तीर्थं
तत् पार्श्वदेवस्य । कालान्तरे तद् बिम्ब ततः स्थानात् 'स्तम्भन'पुरे
पूज्यतेऽधुना ॥

॥ इति नागार्जुनप्रबन्धः[6] ॥१८॥



१ 'साधय मां' इति भावार्थः । २ B- 'तदा वदेः' । ३ अनुष्टुप् । ४ P-
'पश्चात्ता० ब०' । ५ B-P-'आर्द्रौ' । ६ 'नागार्जुनः' इत्यपि B-P-पाठः ।

# [ १९ ]

## ॥ अथ वत्सराजोदयनप्रबन्धः ॥

पूर्वस्यां 'वत्सो' जनपदः । तत्र 'कौशाम्बी' पूः । श्रीऋषभवंश्यशान्तनु-चित्रवीर्य पाण्डु-अर्जुना-ऽभिमन्यु-परीक्षित्-जनमेजयकुले सहस्रानीको राजा । तत्पुत्रः शतानीकः । ५
तस्य पत्नी महासती चेटकराजनन्द(न्दि)नी मृगाक्षी मृगावती नाम । तयोर्नन्दन उदयनः य किल 'नादसमुद्रो' विख्यातः, यो गीतशक्त्या 'उज्जयिन्या' 'अनलगिरी'म 'विन्ध्या'ऽभिमुख गच्छन्तं पुनरालाने निवेश्य चण्डप्रद्योतराज्यमद्योतयत् । स सुखेन राज्यं शास्ति यौवनस्थो भोगी कलासक्तो धीरः ललितो नायकः । १०

इतश्च पाताले 'भोगवद्धर्णं' नाम पत्तनम् । तत्र वासुकिः सर्पराजः श्वेतो नीलसरोजलाञ्छितफणः । तस्य नामलदेवी नाम दयिता । विपुलो देशः । तक्षको नाम तस्य प्रतीहारो विषमादेनीप्रियः यस्य फणामण्डपे त्रयोदशभारकोटयो निवसन्तीति श्रुतिः । वासुकेः पुत्री दिव्यरूपा कनी वसुदत्तिनामा । तस्याः १५
सख्यश्चतुर्दश, तद्यथा— धारू(ः) १ वारू( ) २ चम्पकसेना ३ वसन्तवल्ली ४ मोहमाया ५ मदनमूर्च्छा ६ रम्भा ७ विमलानना ८ तारा ९ सारा १० चन्दनवल्ली ११ लक्ष्मी(ः) १२ लीलावती १३ कलावती १४ । सा ताभिः सह वीणा-मृदङ्ग-वंश-सूक्तादिभिः क्रीडति । २०

एकदा तासां मध्यादेकयोक्तम्— स्वामिनि ! वसुदत्तिके ! अहं सपरिच्छदा मैत्रीर्चा नरलोके 'कौशाम्ब्यां' दिव्यरूपं महोद्यानं क्रीडितुमगाम् । दृष्टं तत्र बकुल-तिचकिल-दमनक-चम्पक-विरह-

१ पुत्री । २ ख-'कल्पवता' । ३ सखी ।

कादिद्रुमाणा सारणीना द्रुमालवालाना वाटीकोट्ट(वाटिकोट [?])स्य श्री । यदि स्वामिनी तत्केलिं काम्यति तदा तत्र पादमवधारयतु । इद श्रुत्वा सा **वसुदत्तिका** ताभि सर्वाभि १४ सहेच्छासिद्धया सहसा तद् वन प्राप्ता । तत्र केलिं कुर्वन्ति ता । कुसुमानि चिन्वन्ति । तै
५ करण्डान् पूरयन्ति । धम्मिल्लानुत्तङ्कयन्ति । हारान् सारान् रचयन्ति । एव खेलन्तीना तासा वने कोकिलकुलकलरवकल कोलाहल उच्छलित । तदाऽऽवर्णनादुध नपालक एत्य ता अद्राक्षीत् । अहो रूपमहो स्वरोऽहो प्रभति विसिष्मिये । भक्त्या श्री**उदयनं** ता समालोकितुमाह्वातुमगमत् । **उदयनो**ऽपि कुतूहलादल्पपरिच्छदो वन
१० मगात् । **वसुदत्ति** ससखीकामालोकिष्ट । अध्यासीच्च— मनोज मन महान्याध परमरसायनमेतत् । अस्या रूपसम्पत् जिह्वाभि कोटिभि ताभिर्वर्णयितुमशक्या ।

"अस्या सर्गविधौ प्रजापतिरभूच्च द्रो नु कान्तिप्रद
शृङ्गारैकरस स्वय नु मदनो मासो नु पुष्पाकर ।
१५ वेदाभ्यासजड कथ नु विषयव्यावृत्तकौतूहलो
निर्मातु प्रभव मनोहरमिद रूप पुराणो मुनि [३] ॥१॥"

यत् पश्यन्ति झगित्यपाङ्गसरणिद्रोणीजुषा चक्षुषा
गच्छन्ति क्रममर्गलितोभयभुज यन्नाम वामभ्रुव ।
भाषन्ते च यदुक्तिभि सचकित वैदग्ध्यमुद्रामभि-
२० रतद् दवस्य रसायन रसनिधेर्मये मनोजन्मन ॥२॥"

त दृष्ट्वा सा पलायिष्ट । नृपोऽप्य वगाद द्रुत द्रुतम् । क्षणार्धेन सर्वा सख्योऽदृश्या समपसत । साऽपि पातालविवरप्राय गर्ते एकस्मिन् प्रविष्टा । राज्ञाऽपि ज्ञातम् कामरूपिणी गमिष्यत्येव

१ घ ष्टि । २ घ अमुर्या । ३ ग पुस्तके मनोज मन ० अदावम एतदाधिक्यम् । ४ विक्रमार्यदर्शिये ( १ ८ ) । ५ सर्जनकार्ये । ६ मधा । ७ शार्दूल० । ८ ग-कालिना० । ९ शार्दूल० ।

इति तावत् करे धृत्वा तस्या वेणीदण्डो 'यमुना'जलप्रवाहप्रायः कृपाणिकयाच्छिन्नः। गता सा मृगशावलोचना। वेणी करेऽस्थात्। तां वेणीं पश्यंस्तां चमत्कृतचकोरचलाचलाक्षीं स मुहुरस्मार्षीत्।

नेत्रेन्दीवरिणी मुखाम्बुरुहिणी भ्रूवल्लिकल्लोलिनी ५

बाहुद्वन्द्वमृणालिनी यदि पुनर्वापी भवेत् सा प्रिया।

तल्लावण्यजलावगाहनजडैरङ्गैरनङ्गानल–

ज्वालाज्वालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥१॥'

ततो हतप्रारम्भ उद्वाप्पः सखेदः पुःपरिसरमेत्यामात्यानाहूयावादीत्— मया एवं एवं बालिकायाः कस्याश्चिद् वेणी छिन्ना। १० सा तु श्वभ्रमूलमगात्। अतो मम राज्येन न कार्यम्। इमामेव वेणीं राज्यं कारयत। तेऽपि तथेति प्रतिपद्य पुर्बहिर्मण्टपे सोत्सवं वेणीं राज्यं कारयन्ति रामपादुकावत्।

इतश्च सा वसुदत्तिका खिन्ना गता स्वमीपेऽस्वाप्सीत्। तस्याः सद्यस्ताकबरीं छिन्नामीक्षित्वा नामलदेवीनाकार्याऽदीदृशत्। जागरितां पुत्रीं नामलदेवी वक्ते! किमेतत्? तथापि परिभवपदमित्यप्राक्षीत्। तनयाऽपि यथास्थितं मात्रे आख्यत्, साऽपि नागपतये स्वपतये। क्रुद्धः सद्योऽसौ तक्षकनामानं कार्ये कथामुक्त्वाऽऽदिक्षत्, यथा– गच्छ, सराष्ट्रं उदयनं भस्मीकुरु। सोऽपि तदादेशादचालीत्। 'कौशाम्बीं' प्रापत्। तत्परिसरे उत्सवान् दृष्ट्वा २० नररूपः कञ्चित् पप्रच्छ– किमेतदुत्सवसाम्राज्यम्?। तत्रत्येन जनेनोक्तम्– एवं एवं राज्ञा दिव्यकन्यावेणी छिन्ना। उत्पन्नानुतापेन राज्यं तदायत्तं कृतम्। अतो वेणी राज्ञीह। राज्ञाऽत्रैव एकदेशे तपस्तप्यते। तक्षकेणोत्सवो दृष्टः। मध्ये भ्रमता राजाऽप्या-

---

१ घ–'वापे'। २ शार्दूल०। ३ ग–'प्रारम्भोद्वाष्प:'। ४ ख-घ–'छिन्ना:'

५ क-घ– 'दिदिक्षत्'।

लोकित । कुशसस्तरग पद्मासनी जपमालापाणि तप क्षामः जितप्राणायाम मौनी। पृष्टश्च तक्षकेण नृरूपेण— कस्त्वम्[१] किमर्थं तपश्चरसि[१] । तेनापि दीर्घमुष्ण च नि श्वस्य गदितम्— भो पुरुषविप्र! किं पृच्छसि मा मन्दभाग्यम्[१] । दृष्टा मयैका पुण्यवती
५ मृगदृक् । तामनुसर्पता मया पातकिना यान्त्यास्तस्या. कबरी कृपाणिकया निजपुण्यदशया सह कृत्ता । सा मनीषित स्थान ससर्प । अह तु **उदयनो** राजा राज्य तत्सात्कृत्वा स्वयं तप. कुर्वाणोऽस्मि । एव श्रुत्वा क्षण स्थित्वा उपद्रवमकृत्वा पाताल यात्वा नागेन्द्रमालपत्— निष्पापप्रज्ञ देव ! दृष्टो मया **उदयनः**
१० वेणीपुरश्च तथा राज्योत्सव । स पुण्यात्मा मृदुमना बाढ परितप्यते । विनयी मानमर्हति । तच्छ्रवणादतुषदाशीविषेन्द्र । तर्हि किं युक्तमिति तक्षकमूचे । तक्षको बभाषे— देव! स एव वसुदत्ति-विवाहार्हः कुलेन शीलेन विद्यया वृत्तेन पराक्रमेण रूपेण च । किं वर्ण्यते स[१] ।

१५ *अमुमकृत यदङ्गना न वेधा, स खलु यशस्वितपस्विना प्रभाव ।
त्रिजगति कथमन्यथा कथाऽपि, क्षत . तपसा पद लभेत[१] ॥१॥[२]

विद्या-कन्या लक्ष्म्यो हि कुस्थाने निवेशिता निवशयितार शपन्ति । **नामलदेवीमत** कनीमत च लब्ध्वा **तक्षकेणैव वत्सराज**-माजूहवत् । प्रवेशमहमचीकरत् । विवाह प्रारब्ध । प्रथमाया
२० दक्षिणाया सवत्सा गौ कामधेनुर्लब्धा, द्वितीयस्यां निशिद्धा नाग-वल्ली, तृतीयस्या सोपधाना खट्वा सतूलिका, चतुर्थ्या रत्नोद्द्योतो दीप । एव रत्नचतुष्केण सत्कृत्य सजाय जामातर 'कौशाम्बी'-पुरीं प्रति प्रैषयत् । गत स्वपुर तत्र ऋद्ध राज्य भुनक्ति ।

*सुधाधौत धाम व्ययभरसहश्चार्थनिवह
२५ सकामा वामाक्षी सुहृदपि निवेद्यात्महृदय ।

---

१ ख-'दध्याया ( ? ) । * एतच्चिह्नाङ्किते पद्ये ग-पुस्तके न वर्तते ।
२ पुष्पिताग्रा ।

गुणानामन्वेष्टा प्रभुरपि च शास्त्रव्यसनिता(तः ?)
पुराऽऽचीर्णस्यैतत् फलमलघु तीव्रतपसः ॥१॥[1]
यदेतत् स्वच्छन्दं विहरणमकार्पण्यमशनं
सदाऽऽर्यैः संवासः श्रुतमुपशमैकाश्रमफलम् ।
मनोमन्दस्पन्दं बहिरिति चिरस्यापि विरसन् ५
न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥२॥[2]

क्रमेण स एव वासवदत्तां चण्डप्रद्योतपुत्रीं गुणकीर्तिं पर्यणैषीत् 'डहाल'देशाधिपपुत्रीं पद्मावतीं च।[3] 'पञ्चाल'देशाधिपेनाक्रान्तं 'कौशाम्बी'राज्यं मन्त्रिक्षात्राभ्यां पुनरग्रहीत्। इति उदयनप्रबन्धः।

इयं च कथा जैनानां न सम्मता, देवजातीयैर्नागैः सह मान- १०
वानां विवाहासम्भवतः। विनोदिसभाऽर्हेति नागमताद्धृत्यात्रोक्ता।

॥ इति उदयनप्रबन्धः ॥ १०. ॥[4]



१-२ शिखरिणी । ३ घ-'पुत्रीं पद्मावतीं च'। ४ घ-'उदयनवीरप्रबन्धः'।

## [ २० ]

### ॥ अथ लक्षणसेनस्य प्रबन्धः ॥

मन्त्रिण **कुमारदेव**स्य च पूर्वस्या 'लक्षणावती' पूः । तत्र
**लक्षणसेनो** नाम प्रतापी न्यायी नृपः । तस्य द्वितीयमिव जीवितं
५ प्रज्ञाविक्रमभक्तिसारो मन्त्री **कुमारदेवः** । विपुलं राज्यम् । अपारं
सैन्यम् । अत्रान्तरे 'वाराणस्यां' **गोविन्दचन्द्रा**ख्यनृपपुत्रो
**जयन्तचन्द्रो** राजा । तस्य **विद्याधरो** मन्त्री । महेच्छानां अल-
दातृणां सत्यवादिनां च प्रथमः ।

एकदा जयन्तचन्द्रसभायां वार्तेयमासीद् यत् 'लक्षणावती'दुर्गं
१० दुर्ग्रहम् । राजा महाचमूसमूहसम्पन्नस्तां वार्तामवधार्य 'कासीपतिः'
प्रतिज्ञां सभासमक्षमग्रहीत्——इतश्चलितोऽस्माभिर्लक्षणावती'दुर्गं
ग्रहीतव्यम्; अथ न गृह्णामि तदा यावन्ति दिनानि दुर्गतटे
तिष्ठामि तावन्ति हेमलक्षाणि दण्डे गृह्णामि, अन्यथा न निवर्ते ।
इति सन्धां निर्माय प्रयाणढक्कामदापयत् । मिलितं समकालं
१५ राजलोकं । जाता गजमयीव सृष्टिः । भूपालमालामयीव भूमिः ।
अश्वमयमिव जगत् । निर्गतं सैन्यं बहिः । अखण्डितैः प्रयाणैर्भञ्जन्
परबलान्, शोषयन् सरांसि, पङ्कयन् नदीः, समीकुर्वन् विषमाणि,
चूर्णयन् शिखराणि, छेदयन् शासनानि, जीवयन् साधुलोकान्,
'लक्षणावतीं' प्राप्तः । दुर्गान्नातिदूरासन्ने भूभागे आवासान् दाप-
२० यामास । लक्षणसेनस्तु द्वाराणि पिधाय पूर्मध्ये एव तस्थौ । क्षु(क्षो)
भिता पुरी । सङ्कीर्णत्वमापन्नमत्र प्रायो घृत-तैल-वसन-ताम्बूलादि-
वस्तूनाम् । स्थाने स्थाने वार्ता आर्ता प्रवर्तन्ते । 'कासीपतिस्तु
मुरकल परदेश भसते । सार्था एहिरियाहिरा कुर्वन्ति सुभिक्षमक्षामम् ।

---

१ ख-'महोत्थानां' । २ ग घ 'दक्षीर्णा' । ३ क-ग 'मद्राक्षीत्' । ४ ख-
'ताम्बूल दर्गीदल दिवस्तूनाम्' । ५ क-ख-'प्रावर्तन्त' ।६ 'मोकळो' इति भाषायाम्

नव्यानि कूपादीनि खनितानि । विचरन्ति स्वैरं सैनिकाः । वर्धन्ते व्यवसायाद् रिद्धयः । लुट्यन्ते ग्रामाः । द्वयोर्नृपयोरूर्ध्वमुखैरधोमुखैः शरैर्युद्धानि । गतानि दिनान्यष्टादश । तस्मिन् दिने साय लक्षणसेनेन कुमारदेवो मन्त्री न्यगादि–मन्त्रिन्! इदमस्माभिरनुचितमाचरितं यदयं रिपुर्देशं प्रविशन्नेव न प्रतिस्खलितः । अ- ५ धुना दुर्गरोधे लोको दुःखी, म्लानग्लानिर्मे, तस्मात् प्रातर्योद्धव्यम्, दण्डं न ददामि। आहूय सामन्ता-ऽमात्यादीन्। कुमारदेवः प्राह–देव! युक्तमेवेदम् ।

मृगेन्द्रं वा मृगारिं वा, ब्रूयं व्याहरता जनः ।
तस्य द्वयमपि व्रीडा, क्रीडादलितदन्तिनः ॥ १ ॥[1] १०

त्वयि धृतायुधे वैजायुधोऽपि कातर एव । तत्काल मिलिताः प्रधानयोधाः । उक्तो युद्धाभिप्रायः । प्रीतास्ते पीतामृता इव । ऊचुश्च—

मित्रस्नेहभरैर्दिग्धो, रूषितो रणरेणुभिः ।
खड्गधाराजलैः स्नातो, धन्यस्यात्मा विशुध्यते ॥१॥[7] १५

वत्तभिर्ता नेत्रवैजयन्त्य । निष्पन्ना वीरकरम्बका । सम्पन्नानि पत्यादिमुक्तकलापनानि । एवं सति कुमारदेवो राजान्तिकाद् गृहं गत्वा मन्त्रयते स्म– अस्माकं प्रभुर्युद्धार्थी, जयन्तचन्द्रस्तु बली । 'अस्थाने यत्नमारम्भो, निदानं क्षयसम्पदः' । तस्मात् किं कर्तव्यम्? । आँ ज्ञातम्– जयचन्द्रमन्त्री विद्याधरोऽनुसरणीयः । २० स हि प्रतिपन्नशूरः सद्रूपो निष्पापो दानी । इति विमृश्य पत्रीभिर्कां स्वलिखितां सहादाय प्राकारान्नगरस्यैनोद्वारेणैवैकाकी निर्गत्य मध्यरात्रे बहिः सैन्ये मन्त्रिगृहद्वारेऽस्थात् । तत्र द्वाःस्थमुखेन मन्त्रिप

१ ख-'खातानि' । २ ख-घ-'व्यवसायदय' । ३ अनुष्टुप् । ४ क-'वक्रायुधाऽपि' । ५ ख-'प्रामन(?)योधा' । ६ ख-'रूषितो०' । ७ अनुष्टुप् । ८ क-'दास्तत्र वैजयन्त्य' । ९ क-ख 'अन्यथा' । १० घ-'अप्यधी(?) यत्नमारम्भे(?)' । ११ ग-'आ० । ज्ञातम्' ।

**विद्याधरं** आत्मानमायान्तमजिज्ञपत् । सच आहूतस्तेन । आसित स्वसमीपे, पृष्टश्च– 'के भवन्त ? । मन्त्रिणोक्तम्– अहं लक्ष्मण सेनाऽमात्य **कुमारदेव**स्त्वां द्रष्टुमायासिषम् । किञ्चिद् वक्तव्यमस्ति । तत् तु वक्तुं न शक्यते । पत्री तु लिखिता वक्ष्यति । इत्युक्त्वा
५ **विद्याधर**हस्ते तामार्पिपत् । तत्र श्लोको दृष्टः—

उपकारसमर्थस्य, तिष्ठन् कार्यातुरः पुरः ।
मूर्त्या यामार्तिमाचष्टे, न तां कृपणया गिरा ॥१॥'

अस्य श्लोकस्यार्थं चिरं परिभाव्य **विद्याधरो**ऽचिन्तयत्– अयं महीयान् मदन्तिकमागतः । **जयन्तचन्द्रा**पसारणमीहते दण्डं च
१० न दित्सते । मय्येव भारमारोपयति । तस्य निस्तार्योऽसौ व्यसन-सागरात् ।

स एव पुरुषो लोके, स एव श्लाघ्यतामिह ।
निर्भयं सर्वभूतानि, यस्मिन् विश्रम्य शेरते ॥१॥'

इति ध्यात्वा **कुमारदेवं** जगाद— मा भैषीः, दण्डं मा दाः,
१५ प्रातरत्र स्मत्सैन्यं न स्थास्यत्येव, गच्छ । इत्युक्त्वा **कुमारदेवं** सत्कृत्य व्यसाक्षीत् । गतः स स्वस्वामिलक्ष्मणसेनसविधम् ।

इतश्च **विद्याधरो जयन्तचन्द्रा**न्तिकं गत्वा विज्ञप्तवान्— राजेन्द्र ! अद्य दवस्थानागतस्य दिनं द्वादशकं गतम् । **कुमार-देवेन** स्वयमेत्य ममाग्रतस्त्र हेमलक्षाणि प्रवेशितानि, 'अतोऽभयं
२० देहि, प्रसीद, स्वस्थानं गच्छ, 'कास्या'मपि मुक्तायां निर्वाहो नास्ति, दुर्भट च दुर्गम् । इति श्रुत्वा 'काशी'न्द्रः सद्यो राजावेग चलित दशक्रोशीं गत्वा स्थित स्वनगराभिमुखाभि पटकुटीभि । 'लक्ष्मणावत्या'लोको विस्मितो हृष्टश्च । लक्ष्मणसेनेन कुमारदेव पृष्ट – किमिति गतो **जयन्तचन्द्रः** ? । मन्त्रिणोक्तम्– देव ! त्वा

१ ग 'दि । २ अनष्टु । ३ घ–'ममान्तिव स (भा)र•' । ४ अनुष्ट । ५ क– 'स्वस्थान । ६ ग पुस्तके 'अ इत्यधिक पाठ ।

युद्धोयन श्रुत्वा 'काशी'न्द्र सुभीत प्राणत्राणार्थं गत । अन्येव तव पिण्डशक्ति ।

> गतिरन्या गजेन्द्रस्य, गतिरन्या खरोष्ट्रयो ।
> गतिरन्यैव सिंहस्य, लीलादलितदन्तिन ॥१॥
>
> क: सिंहस्य चपेटपाटितमदामातङ्गकुम्भस्थल– ५
> स्थूलास्थिस्थपुटीभवत्परिसरा लीलागुहा गाहते ? ।
> क काकोदरमर्तुरुद्धतविषज्वालावलीडस्फुरत्–
> फूत्कारानलिघोरमास्य कुहर साटम्बरश्चुम्बति ? ॥२॥'

अथ चापन्याह्रीरते कश्चित् तयो तथापि क्षम कुत ? । अत स्वर्गीयमन्तुक्रमणोपायोऽस्य तस्य । कास्यासन्न गत 'शास्या'ऽधि- १० पोऽपि विद्याधरमादिशत्– 'लक्षणावना'शदण्डधन चतुर्दिग्मि- लितेभ्योऽर्थिभ्यो देहि येन यशासि प्रथन्ते । विद्याधरोऽपि स्वामिन निगदति– देव । कुमारदेवेन महा रत्नमेक दण्डपदे दत्तम् । तेन सव कथ हेम निष्पद्यते ? । राजोचे– तर्हि रत्न दर्शय । अथ तेन पत्राणम् क्षोरोऽदर्शि, कुमारदेवागमनवृत्ता- १५ न्तश्च प्रोक्त । विद्याधरमुवाच तदवगार्य जयन्तचन्द्रो जजल्प अनन्यधी – मन्त्रिन् ! तदेव किं नेय पत्री दर्शिता येन तेभ्यो विशिष्टा कृपा कुर्मस्तदैव । त्वया स्वमनार्पणह्रीरागेणव वय तत उत्थापिता । प्रापितो दण्डोऽस्यस्य किञ्च तेन । अथ हेमाष्टादश- लक्षाणि कोशादाद्यार्थिभ्यो देहि । अष्टादश हेमलक्षास्तु कृपा २० प्रसादपदे लक्षणसेनाय, अष्टौ हेमलक्षा कुमारदेवाय प्रेषय । तथैव कृत विद्याधरेण । प्रविष्ट 'काशी' तौ । स्थित राज्य मुद्रक । षड्विंशतिहेमलक्षेषु तत्र गतेषु लक्षणसेनेन कुमारदेवः पृष्ट —

---

१ 'अन्यैव' इत्यारभ्य समग्रमिदमार्यानद्वयपर्यन्त पाठ ग–पुस्तके नास्ति । २ अनुदृत् । ३ ज्वलितः । ४ घ– अस्यच शा० । ५ ग–'रमाइ । ६ घ–'दत्त मस्ति' । ७ ख घ–'तेन' ।

किमिदम् ? । कुमारः स्मितपूर्वकमाचष्ट– त्वां विरोध्य कः सुखी तिष्ठेत् ? । ततोऽरिणा दण्डस्तेऽर्पितः । पिप्रिये पृथ्वीपतिः । मुमुदे प्रजाः । ववृते महोत्सवः । एवं मन्त्रिणः कालज्ञाः सुगूढाशयाः लोक-भूपयोः कार्यं कुर्युः[1] ॥

॥ इति लक्षणसेनकुमारदेवप्रबन्धः[2] ॥ २० ॥



१ क–'कुर्युरिति' । २ 'समाप्त इत्यधिको ख-पाठ ।

[ २१ ]

## ॥ अथ मदनवर्मप्रबन्धः ॥

'चौलुक्यवंश्यो' मूलराज-चामुण्डराज-वल्लभराज-दुर्लभराज-भीमान्वये कर्णदेवजन्मा मयणल्लदेविकुक्षिभूः 'द्वादशो रुद्र' इति विदितविरुदः श्रीजयसिंहदेवनामाऽभून्महीपतिः । सो'ऽणहिल्लपत्तना'न्निर्गत्याऽमितैः सैन्यैः 'मालव'देशराजधानीं 'धारां' द्वादशभिर्वर्षैर्जग्राह । प्रतोलीत्रयं स्फोटयित्वा यशःपटहकुञ्जरेण लोहार्गलामन्वभञ्जत् । साऽद्यापि 'देवपत्तने' सोमनाथाग्रे दृश्यते । यशःपटहो मृत्वा व्यन्तरोऽभूत् । जयसिंहो मध्ये पुरं प्रविष्टो मालवेन्द्रं जीवग्राहमग्रहीत् । द्वादश वर्षाणि जयसिंहस्य खड्गो निष्प्रत्याकारोऽस्थात्, नरवर्मचर्मघटितमेव प्रत्याकारं करोमीति प्रतिज्ञावशात्, अत एव हस्त्यारूढं नरवर्माणं भूमौ पातयामास । वितस्तिमात्रं चर्माऽस्योत्कर्तितुमुद्यतोऽभवत् । अत्रान्तरे प्रधानैर्विज्ञप्तम्—राजन् ! राजाऽवध्य एव इति नीतिश्च । तस्मान्मोक्तुमर्होऽयम् । ततो मुक्तः सः । काष्ठपिञ्जरे क्षिप्तः । नरवर्मचर्मणोऽन्यचर्मण्या सिद्धराजेन निजकृपाणे प्रत्याकारः कारितः । ततः कवीश्वरैर्विविधं स्तूयते स —

एक'धारा'पतिर्लेभेऽस्य. द्विधारेणासिना जितः ।
किं चित्रं यदसौ जेतुं, शतधारामपि क्षमः ॥१॥

क्षुण्णाः क्षोणिभृतामनेन सहसा भालाऽस्य 'धारा' ततः
कुण्ठः सिद्धपतेः कृपाण इति रे मा मंस्त क्षत्रियाः ।
आरूढप्रबलप्रतापदहनः सम्प्राप्तधाराश्चिरात्
पीत्वा मालवयोषिदश्रुसलिलं हन्ता पुनर्धिष्यते ॥२॥

---

१ ग-'राजदुर्लभराज०' । २ ग - 'नामा महीपतिरभूत्' । ३ लोहमयीम् । ४ अनुष्टुप् । ५ ग-पुस्तके इदं पद्यं नास्ति । ६ शार्दूल० ।

ततो दक्षिणापथे 'महाराष्ट्र'-'तिलङ्ग'-'कर्णाट'-'पाण्ड्या'दि-
राष्ट्राण्यसाधयत् । अनन्तं धनं सङ्घटितम् । ततो 'गूर्जर'-
धरां प्रति व्याघुटत् । यावद् देशसीमसन्धौ सैन्यनिवेशं कृत्वा स्थित-
स्तावत् सायं एकदा महर्द्ध्या[1] सभायामुपविष्टोऽस्ति प्रत्यक्ष इव
५ सुरपरिवृढः । तावत् कश्चिद् वैदेशिको भट्ट एत्याशीर्वादं भणित्वा
सभां दृष्ट्वाऽवादीदिदम्, यथा—अहो 'परमार'वंशधूमकेतो श्रीसिद्ध-
राजस्य सभा मदनवर्मण इव मनोविस्मयजननी । तदाकर्ण्य
सिद्धेन्द्रः[2] कुतूहलेन भट्टं[3] पुर उपवेश्य पप्रच्छ—भट्ट[4] ! कोऽसौ मदनवर्मा ?
क्व नगरे च राज्यं करोति ? । भट्टः[5] प्राह—देव ! पूर्वस्यां 'महोबक' नाम
१० पत्तनं स्फारम् । तत्र मदनवर्मा नाम पृथ्वीपालः प्राज्ञस्त्यागी
भोगी धर्मी नयी नल इव पुरूरवा[7] इव वत्सराज इव पुनरवतीर्णः
पृथ्व्याम्[8] । न राजानं तत्र पुरं य खलु नित्यं पश्यति सोऽपि वर्ण-
यितुं न पारयति, केवलं पश्यन्नन्तर्मनसं मूक इव स्वादं तद्गुण
जानाति । अस्माकं वचसि प्रायो लोकस्य विश्वासो नास्ति, यावद्-
१५ वलोकनात्, परं प्रेषय कञ्चित्[9] परमाप्तं निजं मन्त्रिणं ज्ञं येन स तामृद्धिं
दृष्ट्वाऽऽगत्य देवपादेभ्यो निवेदयति । एवं भट्टी वाचमवधार्य
सिद्धराजो मन्त्रिणमेकं कतिपयजनयुतं द्रष्टुं तत्र तेनैव [11]भट्टेन
सह प्राहैषीत् । गतौ तौ भट्ट-मन्त्रिणौ । 'महोबक'पत्तनं दर्शितं
भट्टेन मन्त्रिणः । दृष्ट्वा निर्विलम्बं उपराजमेत्य यथास्थितमभाणीत्—
२० अवधारय स्वामिन् ! गतस्तत्राहम् । दर्शितं [13]भट्टेन तत् पत्तनम् ।
तदा वसन्तोत्सवस्तत्र प्रवर्तते । गीयन्ते वसन्ताऽऽन्दोलकादि-
रागैर्गीतानि । भ्रमन्ति दिव्यशृङ्गारा नार्यः । मकरध्वजलक्ष्मीभ्रान्ति-
मुत्पादयन्तो विलसन्ति युवानः । क्रियन्ते प्रतिरथ्यं छण्टनानि

१ ख घ-महर्द्धा । २ इन्द्र । ३ ग-'भट्ट' । ४ ग-'भट्ट' । ५ ग 'भट्ट' ।
६ ग 'भट्ट' । ७ ग पुरूरवाः' । ८ ग-'पृथिव्याम्' । ९ घ-'किंचित्' । १० ख-
'भट्टाभ्यां' । ११ ख-'पुर' । १२ ग-'भट्टेण' । १३ ख-घ- भट्टन मास' ।
१४ ख वसन्तमासव' ।

यक्षकर्दमै । प्रासादे प्रासादे सङ्गीतकानि । देवे देवे महापूजा । भोजनधारासारः प्रतिसद्मनम् । राजकीयसप्ताकारे तु दालिक्कूरा-वेष्टावणानि मुत्कलानि न मुच्यन्ते, किन्तु गर्तायां नियन्त्र्यन्ते तदा सघण्टो हस्ती निमज्जति । राजाऽश्ववाराः परितः पुरं भ्रमन्तो वीटकानि ददते लोकाय । कर्पूरधूलिपर्वोदय । रात्रौ विपणान् ५
वणिजो न संवृण्वन्ति, उद्घाटयन् विमुञ्चन्ति, प्रातरागत्योप विशन्ति । एवं नीतिः व्यवसायोऽप्याचारमात्रेणैव सिद्धार्थस्मात् । तत्र देशे लोहखानिवत् सुवर्णरूप्यखानीर्वहन्ति तेन सर्वं कोऽपि । राज्ञा तु कीदृगप्यास्ते मया न न दृष्ट । इदं तु श्रुतं न नारीकुञ्जरं सभायां कदापि नोपविशति । केवलं हसितललितानि १०
तनोति प्रत्यक्ष इन्द्र ।

एवं वचः श्रुत्वा सिद्धराजो सैन्यरक्षायां सैन्यं नियुज्य महता सैन्येन 'महोबक' प्रति प्रतस्थे । तस्याः तदासन्ने भूप्रदेशे क्रोशा-ष्टकेन । क्षु(क्षो [२])भितो देशः । स्थानात्स्थितैः 'महोबक'म् । प्रधानैः मदनवर्मा दिव्योद्यानस्थः क्रीडन्तममाहूत एत्योच—स्वामिन् ! १५
सिद्धराजो गौर्जर उपनगरमागतोऽस्ति, स कथं पश्चान्निवर्तनीय [४]। मदनवर्मणा स्मित्वा भणितम्—सिद्धराजः सोऽयं 'धारा या द्वादश वर्षाणि निगृह्य अस्थात् । स 'कबाडी राजा' वाच्या भवद्भिः—यदि न पुरं गुप्तं च निघृक्षसि तर्हि युद्धं करिष्याम । अथार्थेन तृप्यसि तदाऽर्थं गृहाणेति । ततो यद् याचते न धराकरस्तद् देयं २०
भवद्भिः, न नयं धने दत्ते श्रेयाम । सोऽपि जानातु चिरं यो नितान्तं कृष्ट्राणि कर्माणि कुर्वाणोऽस्ति । राज्ञो वचसाऽनुगृहीत्वा मन्त्रिणः [६]परचनमगुः । नाम्ना सिद्धसेनेन ज्ञापितम्—दण्ड

१ कर्पूर [illegible] कस्तूरिकाजलद्रवकर्दम [illegible] अन्यमदकोदो [illegible] पृष्ठे [illegible] दे । २ ख-[illegible] । ३ ग—पुस्तके [illegible] पाठ । ४ [illegible] ग-पाठ । ५ ग [illegible] पाठान्तरम् । ६ ग-घ-परमगु ।

दत्त्वा मन्त्रिणो राजवाक्यं दूतमुखेन भाणितम्— यदि अर्थमीहसे तदाऽर्थं गृहाण; भूमिं चेत् तर्हि युद्ध्यामहे वयम्। मदनवर्मदेवाय ज्ञापितमत्र भवदागमनम्। तेन अस्मत्प्रभुणा उक्तम्— 'कबाडी' राजाऽर्थेन तर्पणीय स। सिद्धराजस्तल्लीलया विस्मित षण्णवतिं
५ कोटीः कनकस्यायाचीत्। दत्तास्ता प्रधानैः। सप्त दिनानि सुखं तस्थौ। तथापि पश्चान्न याति। तदा प्रधानैर्भाणितम्—राजन्! अर्थो लब्धस्त्वया, कथमथ न प्रतिगच्छसि? । सिद्धेशेन भणितं मन्त्रि-पुर —स लीलानिधिं भवत्प्रभुं दिदृक्षे। तेऽप्येत्य मदनवर्माण-मभणत्— अर्थेन तोषितः स क्लेशी राजा, परं भणति राजेन्द्र
१० द्रष्टुमीहे। ततो मदनवर्मणा निगदितम्—तर्हि एतु स। तत सैन्यं तथास्थमेव मुक्त्वा मितसैन्यस्तत्रोद्याने आगत सिद्धराजः यत्र महाप्राकारस्थे सौधे मदनवर्माऽस्ति। प्राकाराद् बहिर्योध-लक्षास्तिष्ठन्ति। प्रतोलीं यावदागत्य मध्ये अचीकथत् द्वास्थै -आगतमस्माभिः 'महोबक'प्रभुणा भणितम्— जनचतुष्केण
१५ सहागच्छत। आगतो मध्ये सिद्धराजः। यावत् पश्यति काञ्चन-तोरणानि सप्तप्रवेशद्वाराणि अग्रे ददर्श रजतमहारजतमयीर्वापी, नानादेशभाषाविचक्षणाः शशाङ्कमुखीर्विशालनितम्बस्थलास्तारुण्य-पुण्यावयवा स्त्रीः पणव वेणु-वीणा-मृदङ्गादिकलासक्त परिजन-जनम्। स्फीतानि गीतानि शुश्राव। 'नन्दनो'द्यानाधिकमुद्यान,
२० हिमगृहाणि, हससारसादीन् खगान्, उपकरणानि हैमानि, कदलीदलकोमलानि वसनानि, जनितानङ्गरागान् उत्तुङ्गान् पुष्पकरण्डाद्यैपत। एवं पश्यन् पश्यन् पुर पुरो गच्छन् साक्षा-दिव मदनं मधुरे वयसि वर्तमानं मितमुक्ताफलप्रायभूषणं सर्वाङ्ग-लक्षणं काञ्चनप्रभं मधुरस्वरं तामरसाक्षं तुङ्गघ्राणं उपचितगात्रं

१ 'तथापि॰ याति' इत्यधिक ग-पाठः। २ ख-घ- सिद्धसेन भाणितं मन्त्रिपुरद्दूतारं (?)। ३ ग-'दर्शयन'। ४ ख-घ-'नानादेशवेष(प)भाषा॰'। ५ यादिनविशेष, नानु नगार। ६ घ-'तुङ्गघाण'।

मदनवर्मा गमनमस्यत् । मदनवर्माऽभ्यम्येत्याश्लिष्य छेनासन दत्त्वा तमभाणीत्–सिद्धेन्द्र! पुण्यमथास्माकं येन त्वमतिथिः सम्पन्नोऽसि । सिद्धराजः प्राह– राजन्! आवर्जनावचनमिदं मिथ्या; यत् तु मन्त्रिणाग्रे 'कबाडी' इत्युक्तं तत् सत्यम् । मदनवर्मा जगाद–सिद्धेश! केन वा निगदितमिदम्? । सिद्धेशः प्राह– तवैव ५ मन्त्रिणिस्वावकः । कोऽभिप्रायो मन्त्रिणो भणने देवस्य? । मदनवर्मा आह–देव! नश्वरमायुः, अल्पं जीवितम्, मिता राज्यश्रीः, तुच्छं वयः, तथापि पुण्यैः स्फीतं राज्यं लभ्यते, तदपि चेत् न भुज्यते, लभ्यते विदेशेषु, तत् कथं न कबाडिकत्वम् । सिद्धेशेनोक्तम्–सत्यं सत्यम्, एतादृशः कबाडिक एवाहम् । त्वमेवाय १० धन्यो यस्येत्थं शर्माणि । त्वयि दृष्टेऽस्माकं जीवितं सफलम् । चिरं राज्यं भुङ्क्ष्व । इत्युक्त्वा तस्थौ । मदनवर्मणोत्थाय निजं परिजनकोशदेवतावसरादि सर्वं दर्शितम् । प्रेमाऽवृधत् । विंशत्युत्तरपात्रशतं स्वाङ्गसेवकं सिद्धराजाय व्यतरत् । तेन प्रातो जयसिंहदेवः सैन्यं गृहीत्वा 'धार' जित्वा पत्तनं 'अणहिल्लपुर' प्रविष्टः । १५ तेषां १२० मध्यादर्धं पथि मृतं मार्दवात्, शेषं पत्तने प्रविष्टम् । पत्तनप्रवेशोत्सवे श्रीपालकविना सिद्धराजोपश्लोकना—

काव्यम्—

हे विश्वत्रयनूतनार ! भगवन्! कोऽयं प्रमादस्तव
 न्यस्येवात्र निवेश्य यस्य पतताम्नात्येव वस्तूनि यत् । २०
पाणि यस्य न एव य दिव नरेन्द्रात् सत धर्म्यं या
 चारित्रं च तदन नद् रघुपते'र्श्राद्धस्य'चन्द्रे नृपे ॥१॥

पुन —

नाम तुच्छ 'मन्मनि' ! त्रिपथगे ! सौभाग्यमह्नीं त्यज
 रे 'कालिन्दि' ! तवाऽन्यत्वा कुटिलता ' रेवे' ! व्यस्तत्व चनाम् । २५

---

१ विवेद (?) । २ घ–'कर्मेन्द्रियाद्' । ३ 'सर्वं' इत्यधिकं श–प इ । ४ ज–'धरामध्ये' । ५ स–राज वनि ।६ वर्द्धि० ।

श्रीसिद्धेशकृपाणपाटितरिपुस्कन्धोच्छलच्छोणित-
स्रोतोजातनदीनवीनवनितारक्तोऽम्बुधिर्वर्तते ॥ २ ॥[1]

एवमन्यैरपि भणितानि ॥[2]

॥ इति मदनवर्मप्रबन्धः ॥ २१ ॥



---

१ शार्दूल० । २ ग–'इति कविभिर्भणितानि' ।

[ २२ ]

॥ अथ रत्नश्रावकप्रबन्धः ॥

उत्तरस्यां दिशि 'काश्मीरेषु' देशेषु 'नवहुल्ल' नाम महर्द्धिमत् पत्तनम् । तत्र विक्रमाक्रान्तभूचक्रो नरहंसो नाम भूपालः । तस्य राज्ञी रूपश्रीहसित-रम्भागर्वा विजयादेवीनाम्नी । तत्र पत्तने पूर्णचन्द्रः श्रेष्ठिराजोऽभूत् । तन्नन्दनास्त्रयः रत्नः, मदनः, पूर्णसिंहश्च । त्रयोऽपि जनाः श्रीमन्तः प्रियवदाः सात्त्विकाः प्राज्ञा राजपूज्याः प्रारम्भसिद्धाः । रत्नस्य पत्नी पउमिणिरिति ख्याता। पुत्रस्तु कोमल इति नाम बालो वर्तते । तदा श्रीनेमिनाथ निर्वाणादष्टसहस्री वर्षाणां व्यतीताऽस्ति । अस्मिन्नवसरेऽतिशयज्ञानी पद्ममहादेवनामा 'नवहुल्ल'पत्तनपरिसरे समवासार्षीत् । देवैर्भूमिः शोधिता । उदकच्छोटिता । कनकपद्मं मण्डितम् । तत्र पद्ममहादेव उपविष्टः । मध्ये नगरस्य तदागमनं ज्ञापितमुद्यानपालेन लोकाय नृपाय च । प्रथममागतो नृपः सान्तःपुरपरिच्छदः सरत्न-मदन-पूर्णसिंहः । अपरोऽपि लोकस्तथैव । श्रेष्ठिनी पउमिणिरपि सपुत्रा तत्रागता । एवं सभायां देव-दानव मानव-विद्याधरादिवृन्दसुन्दरायां गुरुर्देशनां प्रारेभे—

यास्यामीति जिनालये स लभते ध्यायंश्चतुर्थं फलं
षष्ठं चोत्थितमुद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादशं
मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥१॥[1]

सय पमज्जणे पुन्नं, सहस्सं च विलेवणे ।
सयसाहस्सिया माला, अणंतं गीयवाइअं ॥२॥[5]

---

१ घ-'कस्मीरेषु नव०' । २ क-ख-'महादेवनामा' ।
३ ख-घ-'तत्र सपुत्रा' । ४ शार्दूल० ।
५ छाया– शतं प्रमार्जने पुण्यं सहस्रं च विलेपने ।
सप्तसाहस्रिका माला अनन्तं गीतवादितम् ॥ ६ अनुष्टुप् ।

५ १० १५ २०

पूजाकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जपः[1] ।
जपकोटिसमं ध्यानं, ध्यानकोटिसमो लयः ॥३॥[2]

इदं सामान्यतः सर्वजिनसेवाफलम् । 'शत्रुञ्जये' तु सविशेषं तदेव, असङ्ख्यानां यतीनां सिद्धत्वेन सिद्धक्षेत्रत्वात् ।

५ धूवे पक्खोवासो, मासक्खवणं कपूरधूवम्मि ।
कत्तिअमासक्खवणं, साहू पडिलाभिए लहइ ॥१॥[3][4]

इति वचनात् । 'शत्रुञ्जया'दपि 'रैवत'सेवा महाफला । 'रैवतो' हि 'शत्रुञ्जयै'कदेशत्वात् 'शत्रुञ्जय' एव, श्रीनेमिकल्याणकत्रयभावादतिशायिमप्रभावश्च । नेमिनाथस्य माहात्म्यं मिथ्यादृशोऽपि
१० प्रभासपुराणे एवं प्रवदन्तः श्रूयन्ते—

पद्मासनसमासीनः श्याममूर्तिर्दिगम्बरः ।
नेमिनाथः शिवेत्याख्यो, नाम चक्रेऽस्य वामनः ॥१॥[5]

वामनावतारे हि वामनेन 'रैवते' नेमिनाथाग्रे बलिबन्धसामर्थ्यार्थं तपस्तेपे इति तत्र कथा ।

१५ कलिकाले महाघोरे, सर्वकल्मषनाशनः ।
दर्शनात् स्पर्शनाद् देवि !, कोटियज्ञफलप्रदः ॥२॥[6]

ईश्वरोक्तमिदं प्रभासपुराणे एवम्, तस्माद् येन नेमिनाथो वन्दितो 'रैवत'[7]गिरिमारुह्य तेन किल परमपदं श्रद्धालुना गृहीतमेवेति तत्त्वम् । इत्येतां देशनां श्रुत्वा रत्नः श्रावक उत्थाय गुरोरग्रे प्रतिज्ञां
२० चक्रे— मया ससङ्घेन यदा 'रैवते' नेमिः प्रणतो भविष्यति, तदा द्वितीया विकृतिर्ग्रहीतव्या । तदैव एकभक्तं भोक्तव्यम् । तावन्तं च कालं यावद् ध्रुवं भूमिशय्या ब्रह्मचर्यं धार्यं । वरं प्राणांस्त्यजामि, परं नेमिनाथं नमाम्येवेति । ततः स्वगृहमायातो राजा

---

१ ब–'गुणा जपः' । अनुष्टुप् ।
३ छाया—धूपे पक्षोपवासो मासक्षपणं कर्पूरधूपे ।
कार्त्तिकमासक्षपणं साधुं प्रतिलाभितान् लभते ॥ ४ आर्या ।
५ ६ अनुष्टुप् । ७ ब–'रैवत' ।

लोकश्च । रत्नश्रावकोपरोधात् पद्ममहादेवस्तत्रास्थात् । रत्नस्तूपायनं दत्त्वा राजानमूचे—राजन् ! मा नेमियात्रायै 'रैवत'-गमनाय विसृज । राज्ञोक्तम्—स्वैरं धर्मं समाचर्यताम् । अस्माकं मतमेतत् । यद् विलोक्यते तद् गृहाण । रत्नो जहर्ष । सङ्घ-ममेलयत् । गज-रथ-तुरग-पदातिरूपं महत्तमं सैन्यं नृपाल्लेभे । ५
यस्य यन्न्यूनं तस्य तत् पूरयामास । अमारि-चैत्यपरिपाटि-शान्तिक-भोजनवार-प्रतिलाभना-बन्दिमोक्ष-लोकसत्काराश्चकार । गणितं मुहूर्त्तम् । चलितो देवालयः । राजा महोत्सवकर. परमसेवा । करभशतैर्धनानि चेलुः । श्रेष्ठिनी पउमिणिर्नृपपत्नीं विजयदेवीं वालयितुमेत्य भेटयितुं जग्मुषी, पदयोस्तस्याः पेतुषी १०
आपृच्छे—स्वामिनि ! यात्रायै यास्यस्मि । भवद्वियोगदुःखं दिन-कतिपयानि धर्मलोभतः सोढुमीहेऽहम् । राज्ञी अपि शास्तुमूचे—सखि ! तत्र गता धनकृशतया कार्पण्यं कृत्वा मा लज्जापात्रं मा कृथाः । स्वैरं ददीथाः । अमूनि धनानि भूषणानि वसनानि च गृहाण । इत्युक्त्वा भूरि ददे । पदानि कतिपयानि सम्प्रैषयत् । निवृत्ता १५
राज्ञी । श्रेष्ठिनी सङ्घमध्यमध्यास्त । श्रीपद्ममहादेवो गुरुः सह व्यवहरत् । तेन सनाथः सङ्घः । नित्यं धनस्य स्वैरं व्ययः । कोटीश्वराः साधर्मिकाः परःसहस्राः । चन्द्रहासव्रणाङ्का भटाः शतसहस्राः । कैश्चित् [?]। एवं पथि तीर्थानि वन्दमानो रत्नः सङ्घपतिर्भ्रातृद्वययुतः सपुत्रः सपत्नीकस्तावद् ययौ यावद् २०
'गोला'-'तोला'ख्यौ द्वौ पर्वतौ स्तः । तत्र प्राप्तः । इह किल 'शत्रुञ्जय'मध्ये भूत्वा 'रैवत' गच्छतां लोकानां 'गोला'-'तोलौ' गिरी न स्तः, परं 'मदेश्वर'पथे गच्छतां स्तः । तत्र 'गोला'-'तोल'-योरद्वयोर्मुखे मिलित्वा 'तोइकद्वयमिव' जातमास्ते । तत्र परिसरे

---

१ सखीम् । २ क- 'शास्रमूचे' । ३ ग-'धनकृच्छ्रतया' । ४ घ-'धनपतिधनानि' । ५ ग- 'यथेच्छं गृहाण' । ६ ग-'तेन सव' । ७ ग-पुस्तके 'पर इत्यधिकः पाठः। ८ 'तोडो' इति भाषायाम् ।

सङ्घ आवासित । दिन सर्वे स्नात्र चैत्यवन्दना-दान-पूजा भोजना-
दीनि स्वैर वर्वृतिरे । रात्रौ सुख स्थितम् । प्रात पुरो गमनाय
सनह्याचलत् सङ्घ । यावदग्रयान गिरिमुखसङ्कटपथेन चलितु
प्रवृत्त तावता कश्चिदेको मषीश्यामो व्यात्तवक्त्रो नरसिंहवपुरट्ट-
५ हासी बहुगव्यूतोच्चो दंष्ट्राकरालास्यो नखरैर्लोक दारयितु प्रवृत्ते ।
भक्षयामि भक्षयामि च उवे । तद् दृष्ट्वा भीतो लोक पश्चा-
न्निवृत्य गच्छति । तद् राजपुत्रैर्ज्ञातम् । तैर्गत्वा स कालरूप प्र-
बभाषे—कस्त्वम् ? कथ जनमुपद्रवसि ? । देवो वा दैत्यो वा
राक्षसो वा येन तत्र म्ना पूजयाम । स काष्ठमूर्तिर्नदति-किं रे
१० बाढ वदथ ? । यदि पुर पदमेक व्रजिष्यथ तदा सर्वान् एकैकशश्च-
र्विष्याम्येव । इति गदति सति तस्मिन् सङ्घरक्षपालैर्भट्टैर्व्यावृत्य
रत्नो विज्ञप्त —देव । एवमेव वृत्तान्त । पुरो गन्तु न लभ्यते,
अभाग्यात् । एव दृष्ट्वा चर्चिता लोका पुर पतिता प्रेक्ष्यन्ताम् ।
तदाकर्ण्य कर्मकतुर निपुणो रत्न । क उपाय ? । का गति ? ।
१५ का मति ? इति कल्पाकलित सङ्घ । विशेषत स्त्रीजन । स्थाने स्थाने
वृन्दशो वार्ता । केचिद् वदन्ति— पश्चान्निवृत्य गम्यते । अय सर्व
भक्षयिष्यत्येव । जीवन्नरो भद्रशतानि पश्यतीति । अपरे त्वाहु —
म्रियते चेद् म्रियताम्, गम्यते पुर, नेमिरेव शरणम् । केचिद्
कुसुमलताान्तरित स्तरथु । अन्ये ज्योतिषमपश्यन् । इतरे सङ्घप्रस्थान-
२० मुहूर्तदातारमनिन्दिषु । इत्येव नियमे वर्तमान सङ्घपतिरत्नेन
भट्टा प्रभाषिता —गत्वा पृच्छत त घोर नर त्व कथ प्रसीदसि,
येन तत् सुखं पुर। व्रजाम । गता भट्टा । भाषित रत्नवचन
तदग्रे । तेनोक्तम् —अहमेतस्या गिरिमुखाऽधिष्ठाता । एक सङ्घ-
प्रधानमानुष भक्षयामि, ततस्तृप्यामि, अन्येषा नोपद्रवामि, प्रतिज्ञा

१ क- ग- 'उत । २ 'तद् दृष्ट्वा' इत्यधिक ग पाठ । ३ 'रजपूत' इति भाषायाम् । ४ 'तत्रस्मा इत्यधिको ग-पाठ । ५ ग-'चर्वयिष्या०'। ६ ग 'भट०' । ७ ग- 'एव तद्दृष्ट्वा०' । ८ ग- प्रेक्ष०' ।

च न लब्धे । [1]तेन महास्तत् सम्यग् निर्णीय तदाश्रय रत्नाय ऊचु । रत्नेनैकत्रोपवेशिता सर्वे लोकास्तथा सन्नद्धा एव भणिताश्च ते लोका –पुण्य मे महद् येनासौ कोऽपि घोरपुरुष एक मानुष जिघृक्षति । तद्भक्षणात् तृप्तश्चेद्वेप न भक्षयति, तस्माद् यूय यात। [2]नेमिं वन्दध्वम्। [3]मयाऽस्ने खङ्ग देयम् । अहो लाभोदय ! इयत्काल विविधयत्नपालित देह सद्वार्थे उपकृतम् । एवमुक्त्वा तूष्णीके सद्देशे राजपुत्रा प्रभणन्ति– नररत्न ! रत्न ! त्व चिर जीव । अस्मा कमध्ये एकतरेण राश्र यतु (?)। वय हि सेवका । सेवकाना च धर्मोऽय यत्प्राणाऽपि प्रभुरुद्धरणीय, अन्यथा धर्म यशो-वृ चिक्षयात् ।

[4]ते मुग्गटा हराविया जे (जे) परिचिद्धा ताह ।
अजरयरनोय तह सामिउ गनिउ त्तह ॥१॥

सद्धप्रधानसाधर्मिक ऊचु —हे रत्न ! त्व चिर जीव । युवाऽसि राजपूज्योऽसि, सहस्रक्षजनपोषकोऽसि, वय विनश्वरकलेवरव्ययेन स्थिर धर्म जिघृक्षामहे ।

[5]जइ रखिज्जइ तो कुहइ, अह डज्झइ तेउ च्छारु ।
एयह दुट्ठकलेवरह ज वाहियह त सारु ॥१॥

मदन पूर्णसिंहभ्रातरौ जगदतु —आवयोस्त्व ज्येष्ठो भ्राता, ज्येष्ठो भ्राता पिता यथा । पितुरायत्तश्च पुत्रप्रायो लघुभ्राता । किं रामाग्रे युद्ध्वा लक्ष्मणेन न प्राणत्याग कृता ? ।

१ ग त महा॰ । २ क 'यात्रु । ३ ग रत्न ।
४ छाया– ते मूर्ध्ना हारिता ये परिचिता तेषाम् ।
अपराधेन तथा स्वामी गञ्जितो यथाम् ॥
५ घ– 'तय इम्मामि ।
६ छाया–यदि रक्ष्यते तर्हि क्थ्यते अथ दह्यते तद् भस्म ।
एतस्य दुष्टकलेवरस्य यद् व्याहृत तत् सारम् ॥
७ घ–'जइ रक्खिज्जइ तो कहइ । ८ घ 'डउ चाह'। ९ घ 'दुट्ठकल॰'।

स्नेहो न ज्ञायते देव !, प्रणाममात्र मृदूक्तित ।
ज्ञायते तु क्वचित् कार्ये, सद्य. प्राणप्रदानत ॥१॥[1]

पउमिणिश्रूते—कुन्स्त्रिय पत्यधीना प्राणा । पत्यौ लोकान्तरिते जीवन्त्यपि मृता , शृङ्गाराद्यभावात् । यथा—

५ शशिना सह याति कौमुदी, सह मेघेन तडिद् विलीयते ।
प्रमदा पतिवर्त्मगा इति, प्रतिपन्न हि विचेतनैरपि ॥१॥[2]

भर्तरि मृते नार्याऽनुमर्तव्यम्—तावद् यदि मयि मृतायां त्व जीवसि तदा किं न लब्ध मया ? । कोमल. प्राह—तात !

एतद्देहविनिर्माणा—द रमणीकृतै· सुतै ।
१० यशोधर्ममय देह—द्वय पित्रोर्विनिर्मितम् ॥१॥[3]

इत्येव वदतस्तान् सर्वान् युक्तिभिर्गाढ निषेध्य स्वय भर्तु स्थिता । सङ्घो वहन् कृत । कापुरुषणोपद्रवो न कृत । गते तु सङ्घे रत्न श्रीनेमिपरायण स्थिर तस्थौ । पउमिणिर्नगरे गता । परत्र स्थित्वा कायोत्सर्गमग्नात्, कोमलोऽपि तथा । कापुरुषेण रत्नो
१५ गिरिगुहाया मेखरया क्षिप्त । द्वारि शिला दत्ता पुच्छ आच्छोटयति । सिंहनादं च बधिरयति । तथापि रत्नो न बिभेति । हृदि स्थिरो जिनराग ।

अत्रान्तरे कूष्माण्डीं वन्दितु 'रैवत'शिखरे क्षेत्रपतय सप्त कालमेघ १ मेघनाद २ गिरिविदारण ३ कपाट ४ सिंह-
२० नाद ५ खोटिक ६ रेवत ७ नामानो मिलिता । ते देवीं वन्दित्वा ऊचु —देवि ! क्वापि पर्वतो धडधडायते । ईदृश क्वापि पूर्वं न श्रुत यादृगधुना वर्तते । तत पश्य किमिदम् ? । कोऽपि पुरुषा महानेक उपद्रूयमाणोऽस्ति केनापि क्रूरेण । अन्यथा

---

१ अनुष्टुप् । २ वियोगिनी वैत लीयइ दरी यपराइया । ३ ख- विनिर्मत', घ- 'विर्तयेन , घ- 'विनियत । ४ अनुष्टुप् । ५ घ- युक्तिभिर्निषिध्य' । ६ घ- 'तथा । ७ ग- 'जत' ।

ज्ञात ज्ञानेन । तौ सह तत्र गता । पउमिणि कोमलौ दृष्टौ तथा कायोत्सर्गस्थौ । कृपाभक्ती आनें । गुहाद्वार गत्वा स आक्षिप्त क्रूर । रे किमिद करोषि ? । युध्यस्व चेत् समर्थोऽसि । रत्नं रक्षामो वय क्षेत्रपाला । अह अम्बा जगदम्बा । तथोक्ते घुर्घुरित स । युद्ध प्रवृत्ते । यावता सोऽम्बया पादे धृत शिर परितो भ्रामयित्वा स्फालयिष्यते ग्रावण्युग्मे तावत् प्रत्यक्षो दिव्यमूर्ति पुरतो नरो ददृशे । रत्नश्च पुर दिव्याभरणाङ्गरागी सप्रिय सपुत्र सुखी। ऊचे च स दिव्याङ्ग —अम्बे ! क्षेत्रपा ! श्रीरत्न ! शृणुत । यदा 'रैवत'महिमान गुरुर्जगौ तदाऽनेन रत्नेन प्रतिज्ञा कृता-- मया प्राणव्ययेनापि नेमिर्वन्दनीय एवेति, तदाऽह वैमानिक सुर शङ्करो नाम तत्र उपगुरु विषण्ण आसम् । मया न सोढा साऽस्य सन्धा । तेनात्रागत्य एवमुपद्रुतोऽय रत्नः महासत्त्व । धन्याऽस्य जाया, पुण्यवानङ्गज , श्लाघ्या यूय सङ्घभक्ताः साहाय्यकराश्च । अह यदि सत्येनैव युध्येय तदा भवद्भिर्न जीयेय, पर क्रीडामात्रमेतदमलिनमनसा कृतमिति । रत्नेर्दृष्ट्वा रत्नमालिङ्ग्य सङ्घमध्ये मुक्त्वा स्वय या गतौ । अम्बावा गिरिमगु । सङ्घो 'रैवतक' मारुरोह । नेमिं ननाम । लेप्यमूर्तौ नेमौ तथा स्नात्र जलैस्तेन यथा निम्ब घटीद्वयेन गलित्वा मृद्भूय भूम्या सह मिलितम् । विषण्णा सर्वेऽपि । विशेषतस्तु रत्नः । अचिन्तयच्च धिग् मामाशातनाकारिण येन एवविधतीर्थस्वसृजिनभाजन जातोऽस्मि । अथ तदा भोक्तव्य यदा तीर्थे पुन स्थापित भविष्यति । इत्युक्त्वा बान्धवौ सङ्घरक्षायै नियुज्याऽम्बां ध्यात्वा तपस्तेपे । षष्ठ्युपवासान्ते अम्बा प्रत्यक्षीभूय त 'काञ्चनबलाना'ख्ये इन्द्रनिर्मिते निशि निनाय । तीर्थे तत्र द्वासप्ततिजिनबिम्बानि महाकायान्यदीदृशत् । तत्राष्टादश हैमानि, अष्टादश रत्नानि, अष्टादश राजतानि, अष्टा-

१ 'पुर' इत्यधिको ग- पाठ । २ घ- 'अनागत्य । ३ पत्नी । ४ ग- 'तीर्थविध्वम० । ५ ग- पुस्तके अथ' इत्यधिक- पाठ ।

[ २३ ]

## ॥ अथ आमडप्रबन्धः ॥

'अणहिल्ल'पुरे 'श्रीमाल'वंश्य श्रेष्ठी **नृपनागः** । तत्पत्नी **सुन्दरी** । तज्ज **श्रीआभडः** । तस्मिन् दशवर्षदेश्ये मातापितरौ धा गतौ । श्रीर्नष्टा तथाऽप्याभडः सुजनाश्रितो व्यवसायज्ञ इति ५
ववृधे । पूर्वजकीर्त्या कन्यां लब्ध्वा । पारेणीत । वृत्त्यर्थे मणिकारकाराणां गृहे घुर्घुरान् घर्षयति । लोटिकान् पञ्चोपार्जति । [2]तेषां मध्ये लोटिकमेकं धर्मे व्ययति । द्वौ कुटुम्बवृत्तिकार्ये । द्वौ सञ्चये निधत्ते । चतुर्दशेऽब्दे पुत्रो जातः । तस्य स्तन्यप्राप्तिरल्पा । अतः छागीगवेषणाय **आभडो** बहिर्ग्रामं गतः । तत्र आवाहे प्रातर्दन्त- १०
धावनं कुरुते । अत्रान्तरे आगतं अजायूथम् । ता आवाहे सर्वाः पयः पातुं लग्नाः । पयः कम्बुधवलमपि सहसा नागवल्लीदलच्छायं जातम् । विस्मित **आभडः** । छागीषु पयः पीत्वा निवृत्तासु यावद् गवेषयति तावदेकस्याः कण्ठे [3]ढौंकत्कं मरकतरत्नगर्भं ज्ञात्वा तेन सहसा [4]विक्रिये । वालोऽनीश्वत् । रत्नं तु शिलाणे उद्द्योतितं १५
महातेजःपुञ्जमयम् । परीक्षकाणां दर्शितम् । तैरमूल्यं भणितम् । तदनु **जयसिंहदेवनृपायार्पितम्** । तुष्टेन राज्ञा [5]एका स्वर्णकोटि दापिता । नखपृष्ठमानं हि तल्लक्षं लभते । **आभडोऽपि** ततः महर्द्धिर्जातः । सुभिक्षं च तदा । व्यवहारी जातः । श्रीजयसिंहराज्यं तदा रूढम् । **आभडस्य** वसहिकास्तिस्रः — एका रोरुपवसही, अ- २०
परा विलम्बवसही, तृतीया पारलौकिकवसही । कौ भाव [6] । धरणबन्धनयातनां कस्यापि न करोति कृपाम्भोधिः । ३६ वेलातटेषु धनार्द्धि महालाभाः । पूगहट्टिका १ निजसदनं २ श्रीहेमसूरिपौषध-

---

१ ग- पुस्तके 'पूर्वजकीर्त्या' इत्यधिक पाठः । २ घ- तत्र लाटिक० । ३ घण्टिकाम्, 'ढोंकरी' इति भाषायाम् । ४ ग- विक्रीता । ५ 'रत्न तु० स्वर्णकोटी दापिता' इत्यधिका ग-प्रते । ६ ग- एतावता को भाव ? ।

शाला ३ मापपिष्टेवेएकचिताऽकारि। अमारिकारकश्रीकुमारपाल-
देवसमये महाव्यापस्तस्य।

एकदा श्रीहेमसूरिभि साधर्मिकवात्सल्य महाफलमिति राज्ञे
व्याख्यातम्। राज्ञा आभड उक्त —त्रुटितधन श्रावककुल दी-
५ नारसहस्र दत्त्वोद्धार्यम्। वर्षान्ते लेख्यक चरमनधाराप्या।
आभडेन वर्षान्ते राज्ञे लेख्यक दर्शितम्। एका कोटिरायाता।
राजा यावद् दापयति तावदाभडेन विज्ञप्तम्— देव! भूभुजा
कोशो द्विधा—स्थावरो जङ्गमश्च। तत्र स्थावरो हेमादिभाण्डागार,
जङ्गमो वणिग्जन। वणिग्धनमपि स्वामिधनमेवेति। राजोवाच—
१० एव मा वादी। लोभपिशाचो मा छलयति। तावन्मात्र तत्काल-
मवानाय्य दापितम्। राजा तुष्ट। एव व्रजति काले राजा कुमार-
पालदेव श्रीहेमश्च वृद्धौ जातौ। श्रीहेमसूरिगच्छे विरोध।
रामचन्द्र-गुणचन्द्रादिवृन्दमेकत, एकतो बालचन्द्र। तस्य
च बालचन्द्रस्य राजभ्रातृजेन अजयपालेन सह मैत्री। [३]एकदा
१५ प्रस्तावे राज्ञो गुरूणामाभडस्य च रात्रौ मन्त्रारम्भ। राजा
पृच्छति— भगवन्नहमपुत्र। क स्वपदे रोपयामि? गुरवो
ब्रुवन्ति—प्रतापमल्लं दौहित्र राजान कुरु धर्मस्थैर्याय। अजय-
पालात् तु त्वत्स्थापितधर्मक्षयो भावी। अत्रा तरे आभडः प्राह—
भगवन्! यादृशस्तादृश ईनीय एवोपकारी। पुन श्रीहेमः—
२० अजयपालं राजान मा कृथा। एव मन्त्र कृत्वोत्थितास्त्रय। स
मन्त्रो बालचन्द्रेण श्रुत। अजयपालाय च कथित। 'हेम'-
गच्छीयरामचन्द्रादिषु द्वेष। आभडे तु प्रीति। श्रीहेमसूरेः
स्वर्गगमनम्। ततो दिनद्वात्रिंशता राजा कुमारपालोऽजयपाल-
दत्तविषेण परलोकमगमत। अजयपालो राज्ये निषण्ण। श्री-

---

१ 'राज थान' इ यारभ्य 'दापित पर्य न पाठाऽधिक ग–पुस्तके दरित। २ ग–'भ्रातृ॰ धन। ३ 'एकदा प्रस्तावे' इत्यधिको ग–पाठ। ४ ग–'आ मीया भव्य। ५ सर्वेषवं' इत्यधिको ग–पाठ। ६ ग–'कथित ।अतो हेम॰'।

हेमद्वेषाद् रामचन्द्रादिशिष्याणां तप्तलोहविष्टरासनयातनया
मारणं कृतम्। राजविहाराणां वह्निना पातनम्। लघुक्षुल्लकाना-
हूय प्रातः प्रातर्मृगयां कर्तुं अभ्यासयति, पूर्वमेते चैत्यपरि-
पाटीमकार्षुरित्युपहासात्। बालचन्द्रोऽपि स्वगोत्रहत्याकारापक
इति ब्रुवद्भिर्ब्राह्मणैर्नृपमनसः उत्तारितः। लज्जितो 'मालवा'न् गत्वा　५
मृतः। पापं पच्यते हि सद्यः। प्रासादपातनं दृष्ट्वा श्रावकलोकः
खिद्यते। आम्बडः पूर्वप्रतिपन्नत्वान्मान्योऽपि वक्तुं न शक्नोति,
उग्रत्वाद् राज्ञः। परं तेन प्रपञ्चेन तु रक्षा कारिता। कथम्?
एकदा आम्बडेन नृपवल्लभः कौतुकी सीलणो नाम भूरिहेम-
दानेन प्रार्थितः —तथा कुरु यथा शेषप्रासादा उद्धरन्ति। तेनो-　१०
क्तम्—निश्चिन्तैः स्थेयम्, रक्षिष्याम्येव। सीलणेन साण्ठकसौ-
धमेकं कृतम्। धवलितं चित्रितं च। पुत्राः पञ्च कर्णे एवमेव-
मुपराजं कर्तव्यं इति शिक्षिताः। गतो नृपान्तिकं सीलणो वदति—
देव! जरा मे शिरसि स्थिता। पुत्रपौत्रवान् जातः। अधुना
तीर्थयात्रायै विदेशान् यामि यद्यादेशः स्यात्। राज्ञोक्तम्—यथा　१५
रुचि तथा चेष्टस्व। तदनु तत्सौधं पुत्रांश्चादाय महासभास्थे नृपे
आगतः। पुत्रा भलापिता क्षितिपतये। पुत्राश्च भाषिताः
राज्ञि पश्यति सति —एतन्मे सौधं यत्नतो रक्ष्यम्। मम यशः-
शरीरमेतत्। यैस्तन्निष्पादितमिति। तैस्तथेति प्रतिपेदे। नृपादि
सर्वं आपृच्छ्य पुरस्तात् कियतामपि भुवं यावत् सीलणो याति　२०
किल तावत् तैस्तत् सौधं लकुटैरास्फाल्य सद्यो भग्नम्। खटत्कारं
श्रुत्वा सीलणो व्याघुटितो वदति—रे हताशाः! अस्मादपि कुनृ-
पात् कुपुत्रा यूयम्। अनेनात्मीये पितरि मृते सति तद्धर्मस्थानानि

---

१ ग पुस्तके 'जात' इत्यधिक पाठः। २ क–घ–'लघुक'। ३ ग–पुस्तके 'पर तेन' इत्यधिक पाठः। ४ क–'भलापिताः, तदा हा कथम्?'। ५ घ–'सीलणो मूरि०'। ६ साठानो इति भाषायाम्। ७ ग–'बहुयत्न०'। ८ 'नृपादि सर्वं' इत्यधिको ग पाठः।

पातितानि, भवद्भिः पुनरहं पदशतकमपि गच्छन् न प्रतीक्षितः । राजा ललज्जे । चैत्यानामपातनमादिशति स्म । तस्य कुत्सितस्य राज्ञो मातापुत्रयोर्भेदाद् विप्लवं कारयितुं रुचिरुत्पन्ना । चण्डास्तथा कारयति । एकदा एकेन चण्ठेन छत्रधृतहस्तकङ्कलोहकर्तृ(र्त्रि)कया जघ्ने । दिनकतिपयानि कीर्तिपाल नामा राजपुत्रो 'गूर्जर'धराया लोकरक्षामकरोत् । छत्र-चामरादीनि न तस्य । तस्मिन् 'मलय'सैन्ये मृते 'गूर्जर'धराया भीमदेवो राजाऽऽसीत् । स दीर्घजीवी, पर निष्फलपुण्याधिकः । तस्य सोढू मोढू द्वे गङ्गरिके । ते द्वे स्नपयति । सर्वशृङ्गारयत्नविभूषिते कारयति । सुखासने उपवेशयति । ग्रामेषु ससैन्यो भ्रमयति । ग्रामाः सैन्यैर्भक्ष्यन्ते । एव बहुकालो गतः ।

एकदा देशपालैः सम्भूय राजा विज्ञप्तः—देव ! निरर्थकं किमिति स्वदेशं भक्षापयसि ? । अन्न घृत-वसनादिव्ययो वृथाऽयम् । तदा राजा आह—कथामेकां शृणुत ।

कश्चिद् वेलाकूले पूर्वं जलवेगाहतो मीनस्तटे लग्नः । तदा तत्र दुर्भिक्षं घोरम् । अन्नाभावे क्षुधार्तो लोकः । अतः सर्वोऽपि जनो कुठाराद्यैश्छेदं छेदं तं मीनं भक्षयितुं गृह्णाति, तथापि स न म्रियते, महाकायत्वात् । अत्रावसरे क्षुधितः पत्नीप्रेरितः कोऽपि विप्रस्तन्मीनमांसं ग्रहीतुमगमत् । तं अपरलोकैश्छिद्यमानं पश्यतस्तस्य स्वभावदयालोर्विप्रस्य दयाऽऽसीत्— न छिनद्मि । तदा व्यन्तरानुप्रवेशात् स मत्स्यो विप्रमाह—भो छिन्द्धि माम् । अन्येऽपि खादन्तः सन्ति । तवोपकृतो भव्यः । विप्रः प्रोचे—दया मे, न छिनद्मि । मीनो वदति—तर्हि शृणु, अयं पापी लोको मां म्रियमाणं मारयति । अहं तु मृत्वाऽत्र तटे राजा भविष्यामि पुरन्दरो नाम । राजकुलेऽवतरिष्यामि । त्वं ममोपाध्यायो भविष्यसि । अहं प्राग्

---

१ क- कर्तिकया' । २ क-'गुर्जरधराया' । ३ 'पर' इत्यधिको ग-पाठः । ४ ग 'तेन न छिनत्ति' ।

वैरादमुं लोकं नवनवभङ्गीभिः कदर्थयिष्यामि । त्वया कस्याप्यर्थे विज्ञप्तिर्नैव करणीया । त्वां तु सत्पुरुषं अहं गुरुबुद्ध्या पूजयिष्यामि । इति जल्पन् मृतः स मीनः यथोक्तो राजा पुरन्दरो नाम समभूत् । विप्रस्तु गुरुः । तं लोकं कृतपरमागस स राजाऽपीपिडत् । विप्रस्तु तदुक्तं स्मरन् न ऊचे किञ्चित् । तस्माद् भो ५ ग्रामण्योऽहमपि तद्विधः कोऽप्यवतीर्णोऽस्मि । क्रीडया पीडयामि लोकम्, तस्माद् भवद्भिर्न वाच्यम् । वक्ष्यथ चेद् तदा रसनां छेत्स्यामि । एव श्रुत्वा स्थितस्तूष्णीं लोकः । देशोऽप्यचीयते ।

एवं राज्ये आभडस्तथैव ऋद्धिमान् । आभडस्य च चाम्पलानाम्नी बालविधवा वाग्मिनी इङ्गितज्ञा सर्वशास्त्रविदुरा १० तनया गृहव्यापारान् करोति कारयति । एकदा लोभात् किञ्चिच्चोरयन् भाण्डागारिको रुष्टेनाभडेन निष्कासितः । स कोपादुपभीमभूप गतः ऊचे च –राजन् ! आभडस्य अनन्ता ऋद्धिः; एवमेव तां गृहाण । राजाऽऽह–'कोऽप्यस्यान्यायोऽस्ति ?' । भाण्डागारिक ऊचे नास्ति । तर्हि परधनं कथं वृथा गृह्यते ? । भाण्डागारिक १५ प्राह– छलं किमपि क्रियते । राजाऽऽह–तथाऽहं करिष्यामि । इति विचार्य भाण्डागारिकं स्वसौधं एव स्थापयित्वा छन्नीमासं दासीशिरसि स्थालस्थं कृत्वा प्राहैषीत् । आगता सा दासी मध्याह्ने आभडसदनद्वारम् । तदा आभडो ध्यानेन जिनमर्चयति । चाम्पलया स्वयं द्वारमुद्घाटि । दासी मध्यमागता । स्थालं २० दर्शितम् । चाम्पलया मांसं दृष्ट्वा तदैव भाण्डागारिककृतिरियं यमित्यूहाञ्चक्रे । मध्ये आनीता सगौरवं सा पृष्टा–किमेतत् ? । दास्याह–राज्ञा उत्सवे गौरवाय च प्रस्थापितमद: । एतन्मांसं चाम्पलया स्थालान्तरे न्यस्तम् । सपादलक्षमूल्यहारो राज्ञेऽर्पितः ।

---

१ ग–'चाम्पलदेनाम्नी' । २ क–'न का॰' । ३ इति विचार्य इत्यधिकः ग-पाठः । ४–५ ग–'चाम्पलदेव्या' । ६ ग–'राज्ञा महिषीमोत्सवे' ।

दास्यै कण्ठाभरणम् । स्थालं मौक्तिकैर्वर्द्धापितम् । दासी दृष्ट्वा उप-
राजं वव्राज । भोजनादनु आभडः पुत्र्या जगदे—तात ! निष्का-
सितभाण्डागारिकप्रेरितनृपकर्तव्यमेतत् । मया दास्यै दीढा न कृता ।
यास्यति श्रीः, परं उपायं कुरु । सर्वं स्वधनं टिप्पयित्वा राज्ञे दर्शय
५ कथय च—गृहाण स्वामिन् ! यदि ते रुचिरस्ति । तथैव चक्रे सः ।
नृपो विस्मितो लज्जितो हृष्टश्च । भाण्डागारिकं तर्टे धृत्वा राजोचे—
रे मूढ ! यस्मै विधिर्द्रव्यं दत्ते तस्मै तद्रक्षोपायबुद्धिमपि दत्ते ।
ततो माऽत्र वृथा मत्सरी स्याः । पुनरेव आभडपादयोर्लगितः सः ।
तृणमपि तत्सत्कं राज्ञा न गृहीतमेव । एष धनी अखण्डभाग्यः
१० चिरायुः नीरुक् आभडः मरणावसरे पुत्रोपकाराय स्वसदने
चतुष्कोण्यां निधिचतुष्कं न्यास्थत् । मृतः स्वयं समाधिना ।
चाम्पलाऽपि[1] द्यां गता । पुत्रैर्बाढे धने गते सति ते निधयः सम्भा-
लिताः, परं न लभ्यन्ते । अञ्जनं च दापितम् । अञ्जनी भणति—
केऽपि श्यामाङ्गा मुद्गरपाणयोऽधोऽधो वनं नयन्ति । किं मुधा
१५ क्लिश्यध्वे ? । जाता निराशाः सामान्यवणिजोऽभवन् । तस्मात्
पुरुषाणां पुण्योदय एव धनवृद्धिनिबन्धनं, न कुलम् ।

॥ इत्याभडप्रबन्धः ॥ २३ ॥



[1] ग-'चाम्पलदेव्यपि'।

[ २४ ]

## ॥ श्रीवस्तुपालप्रबन्धः[1] ॥

श्रीवस्तुपाल-तेजः-पालौ मन्त्रीश्वरावुभावास्ताम् ।
यौ भ्रातरौ प्रसिद्धौ, कीर्तनसङ्ख्या तयोर्भूम ॥१॥[2]

[3]पूर्वं गूर्जरधरित्रीमण्डनायां 'मण्डली'महानगर्यां श्रीवस्तुपाल- ५
तेजःपालाद्या वसन्ति स्म । [4]अन्यदा श्रीमत्'पत्तन'वास्तव्य'प्राग्-
वाट'ऽन्वयठक्कुरश्रीचिण्डपालमजठक्कुरश्रीचण्ड[5]प्रसादाङ्ग[6]जमन्त्रि-
श्रीसोम[7]कुलानतसठक्कुरश्रीआसराजनन्दनौ कुमारदेवीकुक्षिसरो-
वरराजहंसौ श्रीवस्तुपाल-तेजःपालौ श्री'शत्रुञ्जय'-'गिरिनार'दि-
तीर्थयात्रायै प्रस्थितौ । 'हडालक'ग्रामं गत्वा यावत् स्वां भूतिं चि- १०
न्तयन्तस्तावल्लक्षत्रयं जातं सर्वस्वम् [8]। ततः 'सुराष्ट्रा'त् स्व सौस्थ्य-
माकलय्य लक्षमेकमनयोः निधातुं निशीथे महाश्वत्थतलं खानया-
मासतुः । तयोः खानयतोः कस्यापि प्राक्तनं कनकपूर्णं [9]शैलं
कलशो निरगात् । तमादाय श्रीवस्तुपालः तेजःपालजायां अ-
नुपमादेवीं मान्यतया अपृच्छत्– क्व एतन्निधीयते[10] । तयोक्तम्– १५
गिरिशिखरे एवतदुच्चैः स्थाप्यते यथा प्रस्तुतनिधिवन्नान्यसाद्भवति ।
तत् श्रुत्वा श्रीवस्तुपालः तद्द्रव्यं श्री'शत्रुञ्जयो'-'ज्जयन्ता'दौ अव्यय-
यत् । कृतयात्रौ व्यावृत्तौ 'धवलक'पुरमगात् ।

अत्रान्तरे [11]महणदेवी नाम कन्यकुब्जेश्वरसुता जनकात्
प्रसन्नाद् 'गूर्जर'धरां कञ्चुलिकापदे लब्ध्वा सुचिरं भुक्त्वा कालेन २०
मृत्वा तस्यैव 'गूर्जर'देशस्य अधिष्ठात्री महर्द्धिर्व्यन्तरी जाता । सा

---

१ अस्य सारांशः श्रीवस्तुपालचरित्ररूपकीर्तिकौमुदीप्रस्तावनायामाङ्ग्लभाषायां निबद्धोऽस्ति । २ आर्या । ३ ख–'पूर्वं' । ४ ग–'पुरन्दा' । ५ ग–'चण्डपरतदात्मज०' ६ ग–'प्रसादस्तदङ्गज० । ७ ग–'श्रीसोमस्तत्कुलावमन्त्रिश्रीआसराज तनन्दनौ कुमरादेवी०' । ८ ग–'सर्वं स्वं' । ९ ताम्रमयं । १० ग–अव्ययत्' । ११ ग–'महणल्लदेवी' ।

'धवलक्कके' शय्यायां सुखविश्रान्तं राणकं श्रीवीरधवलं प्रत्यक्षीभूय जगाद–राणक ! इयं 'गूर्जर'धरा वनराजप्रभृतिभिर्नरेन्द्रैः सप्तभि- 'श्चापोत्कट'वंश्यैः पण्णवत्यधिकं शतं वर्षाणां भुक्ता, तदनु मूल- राज-चामुण्डराज-वल्लभराज-दुर्लभराज-भीम-कर्ण-जयसिंह-
५ देव-कुमारपालदेव-अजयपालदेव-लघुभीम-अर्णोराजैः श्रीलुक्यैः सनाथीकृता। सम्प्रति युवां पिता-पुत्रौ लवणप्रसाद-वीरधवलौ स्तः। इयं 'गूर्जर'धरा कालवशादन्यायपरैः पापैः साम्यभावात् 'मात्स्य'न्यायेन कदर्थ्यमानाऽऽस्ते म्लेच्छैरिव गौः। यदि युवां वस्तु- पाल तेजःपालौ मन्त्रिणौ कुर्याथे तदा राज्यप्रतापधर्मवृद्धिर्भवति।
१० अहं महणदेवी सर्वव्यापिभिर्भवत्पुण्यैराकृष्टा वदन्त्यस्मि। इति वदन्त्येव विद्युदिव सहसाऽदृश्या बभूव। राणकश्रीवीरधवलः पद्मासनस्थस्तल्पोपविष्टश्चिन्तयति– अहो देव्युपदेशः साक्षात्!। कर्तव्यमेव तन्मन्त्रिद्वयं यद् देव्योक्तम्। यतः —

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
१५ नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम्।
रत्नावलीं जलधयो जनयन्ति किन्तु
संस्कारमत्र मणिकारगणः करोति ॥१॥[1]

इत्यादि चिन्तयन् प्रातरुत्थितः। पूर्वोक्तमेवोपदेशं महणदेवी श्री लवणप्रसादायाप्यदत्त। कृतप्रातःकृत्यौ मिलितौ पिता-पुत्रावेकत्र।
२० कथितं रात्रिवृत्तमन्योन्यम्। तुष्टौ द्वावपि। तदवसरे च तेषां कुलगुरुः पुरुषसरस्वती सोमेश्वरदेवो द्विजः स्वस्त्ययनयोगात्[2]। ज्ञापितोऽसौ तद् वृत्तान्तं ताभ्याम्। सोऽप्युवाच–देवौ! युवयोः प्राचीनपुण्य- प्रेरिता देवता अपि साक्षात्, तस्मात् तदुक्तमाचरताम्। मन्त्रि- बलं विना न किञ्चिद् राज्यपरिकर्मणम्। मन्त्रिणौ च यौ भवतोरमे
२५ प्रतिपादितौ देव्या तावत्रागतौ स्तः। मम मिलितौ राजसेवार्थिनौ

१ ग-'राज एव चौलुक्यैः'। २ ग-'कुर्याथे'। ३ वसन्त०। ४ ग- 'श्वरद्विजः'। ५ घ-'नमनम्'।

द्वासप्ततिकलाविदुरौ न्यायनिष्ठौ जैनधर्मज्ञौ स्त । यथादेश स्यात् तदाऽऽनीयते। राणकादेशात् पुरोहितेन हि तेन सद्य आनीतौ नमस्कारितौ आसनादिप्रतिपत्त्या गौरवितौ । उक्तं च– श्रीलवण- प्रसाददेशाद् वीरधवलेन स्वयम्—

आकृतिर्गुणसमृद्धिशासिनी, नम्रता कुलविशुद्धिसूचिका ।      ५
वाक्क्रम कथितशास्त्रसङ्क्रम , सयमश्च युवयोर्वयोऽधिक ॥
श्लाघ्यता कुलमुपैति पैतृक, स्यान्मनोरथतरु फलग्रहि ।
उन्नमन्ति यशसा सह श्रिय , स्वामिना च पुरुषर्भनादृश ॥२॥
यौवनेऽपि मदनान्न विक्रिया, नो धनेऽपि विनयव्यतिक्रम ।
दुर्जनेऽपि न मनागनार्जव, केन वामिति नवाकृति कृता ॥३॥      १०
आवयोश्च पितृ-पुत्रयोर्महा—नाहित क्षितिभर परद्रुहा ।
तद् युवा सचिवपुङ्गवावह, योक्तुमत्र युगपत् समुत्सहे ॥४॥
येन केन न च धर्मकर्मणा, भूतलेऽत्र सुलभा विभूतय ।
दुर्लभानि सुकृतानि तानि यै–र्लभ्यते पुरुषरत्नमुत्तमम् ॥५॥
अथ वस्तुपाल प्राह—      १५
देव ! सेवकजन स गण्यते, पुण्यवत्सु गुणवत्सु चाग्रणी ।
य प्रसन्नवदनाम्बुज मना, स्वामिना मधुरमेवमुच्यते ॥६॥
नास्ति तीर्थमिह पार्थिवात् पर, यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातक, सम्पदेति च समीहिता सताम् ॥७॥
सम्प्रसादवदनस्य भूपते–र्यत्र यत्र विलसन्ति दृष्टय ।      २०
तत्र तत्र शुचिता कुलीनता, दक्षता सुभगता च गच्छति ॥८॥
किन्तु विज्ञपयिताऽस्मि किञ्चन, स्वामिना तदवधार्यता हृदि ।
न्यायनिष्ठुरतरा गिर सता, श्रोतुमप्यधिकृतिस्तवैव यत् ॥९॥
सा गता शुभमयी युगत्रयी, देव ! सम्प्रति युग कलि पुन ।
सेवकेषु न कृत कृतज्ञता, नापि भूपतिषु यत्र दृश्यते ॥१०॥      २५

---

१ अत पर दशमपर्यन्तानां पद्यानां छन्दो रथोद्धता ।    २ क–ख–'स्वामिन' । ३ ग–'परद्रुहा' । ४ क ग–'कृता' ।

दृष्टिर्नष्टा भूपतीनां तमोभिः–स्ते लोभान्धान् साम्प्रतं कुर्वतेऽमे ।
तैर्नीयन्ते वर्त्मना तेन यत्र, भ्राम्यन्त्याशु व्याकुलास्तेऽपि तेऽपि॥११॥[1]
न सर्वथा कश्चन लोभवर्जित, करोति मेऽग्राममनुग्रामर विभोः ।
तथापि कार्यं स तथा मनीषिभिः, परत्र बाधा न यथाऽत्र वाच्यता ॥
५ ॥१२॥[2]

पुरस्कृत्य न्यायं खलजनमनादृत्य सहजा-
नरीन् निर्जित्य श्रीपतिचरितमादृत्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत् सैष शिरसा
धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते ॥ १३ ॥[4]

१० किञ्च सम्प्रति आवां 'मण्डली'नगरात् सेवार्थिनौ च समीप-
मागतौ स्तः सकुटुम्बौ । लक्षत्रयी द्रव्यस्य नौ गृहेऽस्ति । यदा
देवो पिशुनवचने लगति तदा एतन्मात्रस्वापतेयसहितौ दिव्यं
कारयित्वा आवां मोक्तव्याविति । अत्र काहलिकं मर्यादीकृत्य परि-
गृहस्य धीरां देवयोश्च भवतु इति राणकाभ्यां धीरां दत्त्वा दाप-
१५ यित्वा प्रधानमुद्रानिवेशस्तेजःपालस्य करे कृतः । 'स्तम्भ'तीर्थ
'धवलक्क'योरन्वाधिपत्यं वस्तुपालस्य निवेशितम् । एवं श्रीकरण-
मुद्रायां लब्धायां अन्येव तयोः स्फूर्तिरुदलासीत्, देवतासान्निध्यात्
सहजबुद्धिजल्पोदयाच्च । स्वगृहमायातो वस्तुपालः श्रीजिनराज
पूजयामास । अथ तत्र क्षणमचिन्तयत्–

२० उच्चैर्गर्वे समारोप्य, नरं श्रीराशु नश्यति ।
दैन्यदत्ताऽवलम्बोऽथ, स तस्मादवरोहति ॥१॥[5]
अन्धा एव धनान्धाः स्यु–रिति सत्यं तथा हि ते ।
अयोक्तेनाध्वना गच्छ–न्त्यन्ये हस्तावलम्बिनः ॥२॥
धनी धनात्यये जाते, दूरं दुःखेन दूयते ।
२५ [6]दीपहस्ता प्रदीपेऽस्ते, तमसा बाध्यतेऽधिकम् ॥३॥

---

१ शालिनी । २ ग–पुस्तके पद्यमिदं नास्ति । ३ वंशस्थविलम् । ४ शिखरिणी ।
५ अतः परं दशमपर्यन्तानां पद्यानां छन्दः 'अनुष्टुप्' । ६ ख–'दीपहस्तप्रदीपस्त' ।

¹छत्रच्छायाछलेनासौ, धात्रा चक्रे निवेशिता ।
भ्रमन्तोऽपि स्वमात्मानं, मन्यन्ते स्थिरमीश्वराः ॥४॥
कालेन सौनिकेनेव, नीयमानो जनः पशुः ।
क्षिपत्येष भिगासने, मुख विषयशाड्वले ॥५॥
काय कर्मचरोऽय तन्–मात्रकार्योऽतिलालना ।
मृतिमात्रोचितो होष, प्रपुष्टो निचिकीर्षति ॥६॥
प्रयोजकान्यकार्येषु, नश्यन्त्याशु महापदि ।
दुर्मित्राणीव खान्येषु, बन्धुबुद्धिरधीमताम् ॥७॥
विषयामिषमुत्सृज्य, दण्डमादाय ये स्थिताः ।
ससारसारमेयोऽसौ, बिभ्यत् तेभ्य पलायते ॥८॥
दु खाग्निर्वा स्मराग्निर्वा, क्रोधाग्निर्वा हृदि ज्वलन् ।
न हन्त शान्तिमाप्नोति, देहिनामविवेकिनाम् ॥९॥
विधो विध्यति सक्रोधे, ²नम धर्मं शरीरिणाम् ।
स एव कवच तस्मा–दस्माक जायता गति ॥१०॥

इत्यादि व्याख्या वस्त्राणि परिधाय श्रीवस्तुपालः सपरिजनो बुभुजे । गृहीतताम्बूलो राजकुलमगमत् । एव दिनसप्तके गते प्रथम तत्रापमानाणीकारो एव एकविंशतिलक्षाणि वृहद्द्रम्माणा दाण्डित । पूर्वमविर्नीतोऽभूत् । तदनु विनय ग्राहित । तदन्य कियदपि द्रव्यमपि तत्क्षण सार सैन्य कृत तेज पालेन । पश्चात् सैन्यबलेन 'धवलक'प्रतिबद्धग्रामपञ्चशतीग्रामण्यश्चिर सञ्चित धन हक्कयैव दण्डिता । जीर्णव्यापारिणो निश्चोतिता । एव मिलित प्रभूत स्वम् । तत सकलसैन्यसङ्ग्रहपटुतेनस श्रीवीरधवलं महत्वाकाय सर्वत्र देशमार्येऽभ्रमन् मन्त्री । अदण्डयत् सर्वम् । ततोऽद्भुतऋद्धिर्वीरधवलः । तेजःपालेन जगदे–देव ! सुराष्ट्रराष्ट्रेऽस्त्यनन्तधनिन

१ ख 'छत्र-छाया०' । २ क्ष–'धर्ममशरी०', घ–वमवर्मशरी०' । ३ 'नीचो वाया' इति भाषायाम् ।

गतः स्वपरविभागः । **वीरधवलो** हत इति सैन्यद्वये व्याचक्षे । क्षणार्धेन **वीरधवलो** दिव्याश्वानिरूढ भारसुभटयुक् **साङ्गण-चामुण्डराज**योर्नैकटयपके गत्वा प्रस्तुत । उच्चे न–रे मागधा ! गृहीत करे खड्ग यद्यस्ति तेन । इत्युक्त्वा तद्वत्र यद् दैवैर्दिवि शिरो धूनित दुर्गैर्ह्रदि । हतौ **साङ्गण-चामुण्डराजौ** । असि-मुखे. "शातित रणक्षेत्रम् । पालिता स्व परे च पालनाह । प्रविष्टो **वीरधवलो** 'सामन्तस्थलीं'नगरम् । गृहीत स्वाङ्कयं कोटिमद्रव्य पूर्वजनसञ्चित कनकम्, चतुर्दश शतानि दिव्यतुरङ्गमाणाम्, पञ्च सहस्राणि तेजस्वितुरङ्गमाणाम्, अन्यदपि मणिमुक्ताफलादि । जित जितमिन्युद्रघोष समुच्छलित । स्थितस्तत्र मासमेकम् । ततो वाजामाननगनेन्द्र-चूडमना-वलगाद्गादिव्यवलिन प्रस्पेर गृहीतवना स्तुना । द्वीपवेटपत्तनदु प्रत्येक वभ्राम । ततमङ्गल निर्मितम् । एव 'सार ह'जय कृत्वा मनस्वि राणा 'नगरम्' प्राविक्षत । उत्सवा उत्सवापर्यपुरसृजन् । तत्र प्रस्ताव चारणेन दोधकपाददूय पठितम्—

'जीमड रुहिं जणोह, लाभलि समहरि वाजियद ।

एतावदेन पुन पुनरपाठीत्, नोत्तरार्धम् । गतश्चारण. स्वस्थानम् । तत्र राजवदया दणगा मनाना मध्ये आर्म्भीय नाम स्थापयितु राज्ञा तस्मै प्रत्येक [illegible]द्वाभद्र । सोऽपि समग्रहीत् । एव प्राह प्राह परिपारिते एकदा प्रात. सभाया बहुजनाकीर्णाया दाणकापे उत्त-रार्धमप्यपाठीत्—

'त्रिहु भुजि वीरतणेहिं चड्ड पणि ऊपरवट तणे ॥ १ ॥

---

१ ख–ग–व्याचक्ष । २ ग–'भास्कर' । ३ ख–गृहीत' । ४ ग–'वाधित्र' ।
५ ख–वालावादि ' ।
६ छाया—जित [illegible] [illegible]मिति. कृत्वा समीर वर्तन्ते (?) ।
७ ग'वानद्रह' । ८ ख–'नगाम' ।
९ छाया—त्रयो भुजाभ्या वीरस्य चतुर्नि पादः ऊपरवटस्य ।

[1]इति श्रुत्वा सर्वेऽपि चमत्कृता राजन्यका । अहो प्रपञ्चेनाने-
नास्मान् वञ्चयित्वा निर्यासे तत्त्वमेवोक्तम् । पुन सविशेष ददु,
[2]स्वामिभक्तत्वात् । तदा 'भद्रेश्वर'वेलाकूले **भीमसिंहो** नाम प्रती
हारस्तिष्ठति । स आत्मबली कस्याप्याज्ञा न मन्यते धनी च । तस्मै
५ **वीरधवलो** राजा आदेशमदीदपत्–सेवको भव । सोऽपि [3]प्रत्य
दीदपत्–सेवको भव । यद् दीयते तल्लभ्यते इति न्याय । **वीर**
**धवल**स्तद्विग्रहाय 'गूर्जर'धराराजपुत्रानमेलयत् बहुसैन्य च ।
**भीमसिंहो**ऽपि बलेन प्रबल । उभयपक्षेऽपि बलवत्ता ।

अत्रान्तरे 'जावालि'पुरे 'चाहमान'कुलतिलक श्रीअश्वराज
१० शाखीय **केतुपुत्रसमरसिंह**नन्दन श्रीउदयसिंहो नाम राजा
कुले राज्य भुनक्ति । तस्य दायादास्त्रय सहोदरा **सामन्तपाला**
ऽनन्तपाल त्रिलोकसिंहनामानो दातारः शूरा तद्ग्रासेन
तृप्तिमदधतो 'धवलक्क'मागत्य श्रीवीरधवल द्वास्थेनाबभाषन्
देव ! वय अमुकनृपालय क्षत्रिया सेवार्थिनरा आगता स्म ।
१५ यथादेश स्यात् तदा आगच्छाम । राणकेनाहूतास्ते । तेज
आकृति-श्रमादिभि शोभना । रुचितास्त तस्य । पर पृष्टा –
को ग्रासो न कल्प्यते ? । ते प्रोचु –देव ! प्रतिपुरुष 'द्रमसा'-
पुरीयद्रम्माया लक्ष लक्ष ग्रास । राणकेनोक्तम इयता धनेन
शतानि भटानां सङ्गृह्यन्ते । किमधिक यूय करिष्यथ [4] । न
२० दास्यामायत् । इति कथयित्वा ते वीटकदानपूर्व विसृष्टा । तदा
मन्त्रिवस्तुपाल-तेजपालाभ्या विज्ञप्तम् स्वामिन् ! न एते [5]विमु
च्यन्ते । पुरुषसङ्ग्रहाद् धन न बहु मन्तव्यम् ।

वाजि-वारण-लोहानां, काष्ठ पाषाण-वाससाम् ।
नारी-पुरुष-तोयानां, अन्तरं महदन्तरम् ॥ १ ॥[5]

२५ एव विज्ञप्तमपि राणकेन नावधारितम् । मुक्ता एव ते गता प्रति

---

१ 'इति श्रुत्वा' इत्यधिक ग–पाठ । २ स्वामिभक्तत्वात्' इत्यधिक ग–पाठः ।
३ घ–'प्रत्यदीदपत्' । ४ ग–'भ्रष्यन्त' । ५ अनुष्टुप् ।

भेटितम्। श्रीभीमसिंहप्रतीहारेण मेलितास्ते। उक्तो वीरधवल-कृत कार्पण्यव्यवहार। तुष्टो भीमसिंहः। कृत तदिष्टवृत्तिद्विगुणम्। तत्रोक्तम्—देव! निवेद्य कथनीय वीरधवलाय अस्मद्-वचनेन, यथा—यदि वनितोऽसि तदा मित्र युद्धायागच्छेः, अथवा अस्मदाये भूत्वा जाते। प्रेषितो भीमसिंहेन भट्ट। उक्त ममेत्य ५
वीरधवलस्तत्। एव श्रुत्वा वीरधवलः ससैन्यश्चलित। भद्रपुर प्राहयात्। 'पञ्चग्रामा'ग्रे युद्धमायये। तत्र क्षत्र रारयन्नस्मि। शीघ्रमागच्छेरित्याख्याय्यापयत्। सोऽपि तत्र ग्रामे समेन सैन्येन सनद्ध। सङ्घटिते सैन्यद्वयम्। गर्जन्ति भटाना सिंहनादा।
नृत्यन्ति पात्राणि। दीयन्ते दानानि। 'पूज्यन्ते शस्त्राणि। वाद्यन्ते १०
महावीरगणा ढाटराणि। त्रिदिनान्त युद्ध प्रवर्तितम्। उत्कण्ठिता
योधा। 'नैदीयानिह बाहूना—महतो हि महामह'। सङ्ग्राम
दिनादनौग् मन्त्रिवस्तुपाल-तेजःपालाभ्या स्वामी विज्ञप्त—देव!
वयो भरमा सुभटास्तया न सङ्गृहीतास्ते परदेश मिलिता।
तद्बलेन भीमसिंहो निर्भीगर्जति। इति जनवार्ता। चरैरपि १५
निवेदितमेतत्। राणकेनोक्तम्—यदस्ति तदस्तु, किं भयम्?।
'जयो वा मृत्युर्वा युधि भुजभृता कः परिभव?'। मन्त्रिणा न्याय-सोक्तम्—स्वामिन्! कार्मुककरे देवे के परे परोक्षा अपि?।
यदुक्तम्—

> काऽपि केचिमत्कुरोतु करिणः नटन्तु कान्तासखा २०
> 'कासारे वन कासराः सरभस गर्जन्त्विह स्वेच्छया।
> अभ्यस्यन्तु भयोज्झिताश्च हरिणा भूयोऽपि झम्पागति
> कान्तारान्तरसञ्चरव्यसनवान् यावन्न कण्ठीरव ॥ १ ॥[10]

---

१ व-'मम्म्'। २ ग-'प्रतीहार भेटित स उक्ता। ३ ग 'पत्र। ४ 'एव श्रुत्वा' इत्यधिक ग-पाठ। ५ घ-'ग्रामाग्रस्थ'। ६ "पूज्यन्त० ढोहरादि' इत्यधिक पाठो ग-पुस्तके वर्तते। ७ ग-'योद्धा। ८ मरुभूमिवासा। ९ ख-'साका(काषा)रे वनकासरा। १० शार्दूल०।

कण्ठीरवे तु दृष्टे कुण्डा सर्वे वन्या । अन्यच्च—प्रभो ! अस्मदीय-
सैन्ये 'डोडीया'वंशीयो जेहुल 'चौलुक्य' सोमवर्मा 'गुल्कुल्य'
क्षेत्रवर्माऽस्ति । देवस्तु किं वर्ण्यते कल्यर्जुन ? । एवं वार्तासु
वर्तमानासु द्वास्थ एत्य व्यजिज्ञपद् राणकम्— देव ! पुरुष एको
५ द्वारि योऽस्ति, कस्तस्यादेशः ? । भ्रूसंज्ञया राणकस्तममोचयत् ।
मध्यमागत्य स उवाच—देव ! सामन्तपाला ऽनन्तपाल-त्रि-
लोकसिंहस्यक्तैर्भीमसिंहमाश्रितैः कथापितमस्ति—देव ! त्रि-
भिर्लक्षैर्भटास्त्वया स्थापिता भवन्ति तैरस्मान् सम्यग् रक्षेः ।
प्रातः कुमार्यां आरेण्या (?) त्वामेव प्रथमतममेष्यामः । इति श्रुत्वा
१० हृष्टेन राणेन ससत्कारं स प्रेषि । कथापितं च—एते वयमागता
एव प्रतिभ क्षेरपि दास्यम् । स नामपि तत्रैव ज्ञास्यते भुजसौष्ठवम् ।
गतः स तत्र । प्रातर्मिलितं दलद्वयम् । वादितानि रणतूर्याणि ।
अङ्गेषु भटानां वर्माणि न ममुः । दत्तानि दानानि ।
तैस्तु त्रिभिर्मार्गैरात्मीय [illegible] भीमसिंहात् सद्यो
१५ लाधाऽधेभ्यो ददे । स्वयमश्वेष्वारूढाः । प्रवर्तन्ते प्रहाराः ।
उत्थितमाभ्य दार्ढ्ये । पतन्ति शराः कृतान्तदूताभाः । आरूढ
प्रहरमात्रमद्य । सावधानो वीरधवलः । दत्तावधाना मल्लपादय-
स्तद्रक्षया । अत्रान्तरे आगतास्ते त्रयो महावीराः । भाषितं स्वमुखेन
तैर्वीरधवलः—अथ देव इमे वयम्, सावधानीभूय रक्षामानम्,
२० स्वयोधा अपि त्वां रक्षन्तु । वीरधवलेनाप्युक्तम्—किमत्र विचार-

ऊपरवटाऽश्वात् पातितः । ऊपरवटस्तैर्गोरवे स्त्रोतारके बन्धित प्रच्छन्न । रजसाऽन्ध जगत् । तदा राजश्रीवीरधवलो भुवि पातितो भट्टैरुत्पाट्य ल्ले । तावता पतिता सन्ध्या । निवृत्त सैन्यद्वयम् । रात्रौ भीमसिंहीया सुभटा सर्वेऽपि वदन्ति । अस्माभिर्वीरधवलः पातित पातित । ततो मारवैरभिहितम्— युष्माभि पातित इति किमत्राभिज्ञानम् ? । तैरुक्तम्—कि भवद्भि पातित ? । मारवैरभिदधे—अस्माभिरेव पातितः । ऊपरवटो यदिष्य- ति । उत्तरफादानीय ऊपरवटो दर्शित । दृष्टा भीमसिंह । उक्तवांश्च 'शुद्धराजपुत्रेभ्यो दत्त धन शतधा फलति; इदमेव प्रमाणम् । रिपुहयहरण क्षत्रियाणा महान् शृङ्गार । एव वार्ता कुर्वता भटाना रात्रिर्गता । प्रातर्वीरधवलो व्रणजर्जरोऽपि पदूभूया- क्षान् 'दीवितु पवृत्तः । भीमसिंहसैन्यहेरिकैर्गत्वा तज्ज्ञात्वा तत्रोक्तम्—वीरधवलः कुशली गर्जति । एवं सति यज्जानीथ तत् कुरुथ । अथ भीमसिंहाय तन्मन्त्रिभिर्विज्ञप्तम् देव । अय बद्धमूलो देशेश । अनेन विरोधो दुरायति, तस्मात् सन्धि श्रेष्ठ । भीम- सिंहेन मानित तद्वचनम्, पर सङ्ग्रामडम्बर कृत । अन्योन्य- मपि यावद् मिलितौ द्वौ । तावद् मध्यन्तरा प्रविश्य मेल कृत । ऊपरवटाश्वो राणाय दापित । भीमसिंहेन 'भद्रेश्वर'मात्रेण धृति- र्धरणीया । बिरुदानि न पाठनीयानि । इति व्यवस्थाऽऽसीत् । एव कृत्वा श्रीवीरधवलो दान तन्वन् 'धवलक्कक'मागात् । शनै शनै प्राप्तपरमप्राणो भीमसिंहमपराध्य त मूलादुच्छेद्य एकवीरा धरित्रीमकरोत् । एव 'धवलक्कके' कुर्वतस्तस्य क्षुभितै प्रभूतै पराराष्ट्रनृपतिभि स्व दत्तम् । तेन स्वेन सैन्यमेव मिलितम् । चतुर्दश शतानि महाकुलानि राजवश्याना राजपुत्राणा मेलितानि ।

५ १० १५ २०

---

१ ख-'सिंहराज॰' । २ क-'दवितु', ख-'वादितु', ग 'क्रोडितुम्' । ३ घ- 'सैन्यकैर्हेरिकै॰' । ४ 'एव सति' इति ग-पुस्तकेऽधिक पाठ । ५ क-ख-घ- सेनेन मत' ।

तानि समभोजन-वसन-भोग-वाहनानि श्रीतेजःपालस्य सहचारिणी छायावत् समजीवितमरणत्वेन स्थितानि । तद्बलेन सैन्यबलेन स्वभुजाबलेन च सर्वं जीयते ।

इतश्च 'महीतटा'ख्यदेशे 'गोध्रा(धरा?)'नाम नगरं वर्तते यत्र
५ तत्तत्कार्येषु सङ्ग्रामे मृतानां राजपुत्राणां एकोत्तरशतसङ्ख्यानि स्वयं तु लिङ्गानि उदभूवन् । तत्र घूघुलो नाम मण्डलीकः । स 'गूर्जर'धरासमागन्तुकसार्थान् गृह्णाति । राणश्रीवीरधवलस्याज्ञां न मन्यते । तस्मै मन्त्रिभ्यां वस्तुपाल तेजःपालाभ्यां भट्टः प्रेषितः । अस्मत्प्रभोराज्ञा मन्यस्व, अन्यथा साङ्गण-चामुण्डराजादीनां
१० मध्ये मिल, इति कथापितम् । तच्छ्रवणात् क्रुद्धेन तेन तेनैव भट्टेन सह स्वभट्टः प्रस्थापितः । तेनागत्य राजश्रीवीरधवलाय कज्जलगृह शाटिका चेति द्वयं दत्तम् । उक्तं च—ममान्तःपुरं सर्वोऽपि राजलोक इति न प्रभुणा ख्यापितमस्ति । राणेन स भट्टः सत्कृत्य प्रहितः गतः स्वस्थानम् । राणेन भाषिताः सर्वे निजभटाः । उक्तं च—
१५ घूघुलनिग्रहाय वीटकं को ग्रहीष्यति[1] । कोऽपि नाद्रियते । तदा तेजःपालेन गृहीतम् । चलितः प्रौढसैन्यपरिच्छदः । गतस्तद्देशा-दर्वाग्भागे । नियन्त्र्यामपि भुवि स्थित्वा सैन्यं कियदपि स्वल्पममे प्रास्थापयत् । स्वयं महति सैन्ये गुप्ततरः स्थितः । अल्पेन सैन्येनाग्रे गत्वा 'गोध्रा'गोकुलानि वालितानि । गोपालाः [illegible]रैस्ताडिताः ।
२० तैरन्तर्'गोध्रक' पूत्कृतम्—गावो ह्रियन्ते कथित् । भ्रातः धर्मं पुरस्कृत्य ततो धावत धावत । इति शब्दे श्रुते घूघुलो [illegible]चिन्तयति-मदीनमिदम् । केनाराज्ञैव[illegible] गावो ह्रियन्ते[2] ।

घृष्टि[illegible]रियाँ द्विजानिमरणे स्वामिमुखे गोग्रहे
मग्नाति शरणे गजग्रहरणे मित्रापदा वारणे ।

---

१ [illegible] 'यस्य' [illegible] ।
२ [illegible] ।
३ 'भाइर' इति भवताम् ।

आर्तत्राणपरायणैकमनसां येषां न शस्त्रग्रह-
स्तानालोक्य विलोमितु मृगयते सूर्योऽपि सूर्यान्तरम् ॥१॥

इति वदन्नेव ससैनस्तुरङ्गमारूढो [1]गतोऽनुपद गोहर्तृणाम् । गोहर्तारोऽपि घूघुलाय दर्शनं ददते शरान् सदधते । न च स्थित्वा युध्यन्ते । इत्येव खेदयाद्भिस्तैस्तावन्नीतो घूघुलः याव-मन्त्रि- ५
णो महति वृन्दे प्रविष्टः । ततो ज्ञातमीदृग् छद्मेद मन्त्रिण । भवतु तावत्, घूघुलोऽस्मि । निजाः सुभटा समराय प्रेरिता । स्वयं सविशेषमभियोग दधौ । ततो लग्नं सङ्गर्तुम् । मन्त्रिपृतनाऽपि दुर्दौके । चिरं रणरसभरोऽभूत् । भग्नं घूघुलेन मन्त्रिकटकं कान्दिशीकं [2]दिशो दिशं गच्छति । तदा मन्त्रितेजःपालेन स्थिरं अश्व- १०
स्थितेन तटस्था सप्तकुलीना शुद्धराजपुत्रा भाषिता – अरिस्तावद् बली । आत्मीयं तु भग्नं सकलं बेलम् । नष्टानामस्माकं का गतिः ? । किं यशः ? । यशो विना जीवितव्यमपि नास्त्येव । तस्मात् कुर्मः समुचितम् । तैरपि सप्तभिस्तद्वचोऽभिमतम् । व्याघुटिताऽष्टौ घ्नन्ति नाराचादिभि परसेनाम् । ताव-मात्र स्ववृन्दं सङ्घटितं दृष्ट्वा अपरेऽपि १५
सत्त्व धृत्वा वलिता । तदा तेजःपाल एकत्र निजासिऽम्बिकादेवीं अपरत्र कपर्दियक्षं पश्यति । अतो जयं निश्चित्य [3]प्रहरंस्तावद् ययौ यावद् घूघुलः । गत्वा भाषितं –मण्डलिक ! येनास्मत्स्वामिने कज्जलगृहादि प्रदीयते तद् भुजबलं दर्शय । घूघुलोऽपि प्रत्याह– इदं तद्भुजबलं पश्य । इत्युक्त्वा निबिडं युयुधे । द्वन्द्वयुद्धं मन्त्रि- २०
मण्डलीकयो सञ्जातम् । अथ मन्त्री सहसा दैवबलभुजबललाभ्या तमश्वादपीपतत् । जीवन्तं बद्ध्वा काष्ठपञ्जरेऽविक्षिपत् । स्वसेना-न्तर्निनाय । स्वयं बहुपरिच्छदो 'गोध्रा'नगरं प्रविवेश । अष्टादश कोटीर्हेम्नो कोशः, अश्वसहस्राणि चत्वारि, मूटकं शुद्धमुक्ताफलाना,

---

१ शार्दूल० । २ ख घ 'जातोऽनुपदी गो०' । ३ ग 'मन्त्रिकटकेनापि' । ४ ग– 'दिशोदिशं । ५ 'बलं' इत्यधिकोऽत्र पाठः । ६ ख घ–'प्रसर०' । ७ घ–'स्वर्गम्यान्त०' ।

दिव्यास्त्राणि, दिव्यवस्त्राणि इत्यादि सर्वं जग्राह । घूघुलस्थाने आत्मीय सेवक न्यास्थत् । वलितो मन्त्री गतो 'धवलक्क'म् । दर्शिता घूघूलश्री श्रीवीरधवलाय । तत्र जलगृह तद्गले बद्ध शाटिका च कण्ठे परिधापिता । तदा घूघूलः स्वजिह्वा दन्तै खण्डयित्वा मृत. ।
५ जात वर्द्धापन 'धवलक्क' । श्रीवीरधवलेन महत्या सभायामाकार्य श्रीतेजःपालः परिधापित । प्रसादपदे स्वर्णं भूरि ददे । तदवसरे कवीश्वरसोमेश्वरे च दृक् सञ्चारिता श्रीवीरधवलेन । तत सोमेश्वरदेवः प्राह—

मार्गे कर्दमदुस्तरे जलभृते गर्ताशतैराकुले
१० खिन्ने शाकटिके भरेऽतिविषमे दूर गते रोधसि ।
शब्देनैतदह ब्रवीमि महता कृत्वोर्ध्वमूर्ध्वा तर्जनी-
मीदृक्षे गहने विहाय धवलं वोढु भर क क्षम ॥१॥

विसृष्टा सभा । मिलितौ वस्तुपाल-तेजःपालावेकत्र । कृता कथा चिरम् । तुष्टौ द्वौ मन्त्रयेते स्म—धर्मे एव धनमिद पुण्यलब्ध व्यय-
१५ नीयम् । तत सविशेष तथैव कुरुत । तत कविना केनाप्युक्तम्—

प्रधानमेको न कदापि गच्छे-दिति स्मृतिप्रोक्तमिव स्मरन्तौ ।
तौ भ्रातरौ सन्नृतिमोदचारौ, सम्भूय धर्मऽध्वनि सम्प्रवृत्तौ ॥१॥

अथ श्रीवस्तुपालः शुभे मुहूर्ते 'स्तम्भ'तीर्थे गत । तत्र मि
२० लित चातुर्वर्ण्यर् । दानेन तोषित सर्वम् । तत्र च सदीकनामा नौवित्तिको वसति । स च सर्वबेलाकूलेषु प्रसरमाणविभवो महाधनाढ्य वहमूर अधिकारिण न तु नायाति । प्रत्युत तत्पार्श्वेऽधिकारिणा गन्तव्यम् । एव बहु काले गत । पूर्वं मन्त्रीन्द्रस्त मह-

नोवाच—अस्मान् नन्तुं किमिति नागच्छसि [1]। स प्रतिवक्ति—तव नवेयं रीतिः। प्रागपि नागच्छामि। यत् तु स्यान्न्यूनं तव तदा तद् पूरयामि स्थानस्थः। तच्छ्रुत्वा मन्त्री रुष्टः कथापयामास—पुरुषो भूत्वा तिष्ठेः। शास्मि त्वां दुर्विनीतम्। ततस्तेन 'वड्ड'आरत्रयेला-कूलस्वामी राजपुत्रः पञ्चाशद्धर्शमभ्यस्यन्वादिरमुगलस्य एकखड्ग- ५
प्रहारेण छेदने प्रभुः प्रभूतसैन्यत्वात् 'साहणसमुद्र' इति ख्यातः शङ्खाख्य उत्थापितः। तेन [2]भाणित मन्त्रिणे—मन्त्रिन्! मदीयमेक नैमित्तक न सहसे?। मदीय [3]मित्रमसौ। तस्माद् वचनात् क्रुद्धो मन्त्री त[4]प्रत्युवोचत्—श्मशानवासी भूतेभ्यो न बिभेति। त्वमेव प्रगुणो भूत्वा युधि [5]तिष्ठेः। इति श्रुत्वा सन्नद्धबद्धो भूत्वा सोऽप्यागत। १०
[6]मन्त्रिवस्तुपालोऽपि 'धवलक्का'द् भूरि सैन्यमानाय्याभ्यषेण-यत्। रणक्षेत्रे मिलितौ द्वौ। प्रारब्ध रणम्। शङ्खेन निर्द-लित मन्त्रिसैन्य पलायिष्ट दिशो दिशि। तदा श्रीवस्तुपालेन स्वस्य राजपुत्रो माहेचकनामा भाषित —इद असम्मूल्यंघट्ट वर्तते त्व च वर्तसे। तत् कुरु येन श्रीवीरधवलो न लज्जते। ततोऽसौ राज- १५
पुत्रः स्वैरेव कतिपयैर्मित्रराजपुत्रैः सह तमभिगम्योवाच—शङ्ख! नेयं 'वड्ड'आख्या तव ग्रामटिका क्रीडा, क्षत्रियाणा स ग्रामोऽयम्। शङ्खोऽप्याह—सुष्ठु वक्तु वेत्सि। नाय तव प्रभो पट्ट, किल परिपन्थिन प्रदेश। किं नु सुभटस्य क्रीडाक्षेत्रमिदम् [?]। इत्येव वादे जाते द्वन्द्वरणे माहेचकेन मन्त्रिणि पश्यति मन्त्रिप्रता- २०
पाच्छङ्ख पातित। समरे जातो जयजयकारः। मन्त्रिणा तद्राज्य गृहीतम्। 'वेला'कूलर्द्धीना क्व सङ्ख्या [?]। तत 'स्तम्भ'तीर्थ-

---

१ ख–घ–'स वक्ति—न न चेय रानि। २ ग–पुस्तके 'तदा' इत्यधिक पाठ। ३ ख–घ–'रुङ्गन छेदने। ४ क ख–'भन्नि। ५ 'इय' इत्यधिको ग–पाठ। ६ घ–'प्रत्यवादचत्। ७ घ–'तिष्ठया। सन्नद्ध० म। मन्त्रि०'। ८ ग–'मन्त्रिण वस्तु-पालेनापि। ९ ग–घट्ट त्वमेव वत्स। स्वय तत्'। १० ग–'प्रासग्राम आखुरक्रुदा, किन्तु'। ११ ख–'वृद्धनृपर्द्धीनां'।

मुक्तोरणमुत्पताकमविशत् । ततो मन्त्री प्रविष्टः [1]सदीकसदनम् । तस्य भट्टान् सप्तद्विगुणितशतानि सन्नद्धान् हत्वा तं जीवग्राहं जग्राह । विब्रुवाणं तं कृपाणेन जघान । ततो गृहं तदीयमामूलचूलं खानितं पातितं च । हेमेष्टिकानां सङ्ख्या न । तथा मणि-मुक्ताफलपदकानां प्रमाणं केनापि न ज्ञातम् । केचिद् वृद्धा वदन्ति—तत्र तेजनतुरिकायां करण्डश्चटितः श्रीमन्त्रीश्वरस्य । आयातो मन्त्री स्वधवलगृहम् । तोषितः स्वस्वामी वीरः परिग्रह-[3]लोकश्च । ततः कवीश्वराणां स्तुतिः—

श्रीवस्तुपाल ! प्रतिपक्षकाल !, त्वया प्रपेदे पुरुषोत्तमत्वम् ।
तीरेऽपि वार्धेरवृत्तेऽपि मात्स्ये, रूपे पराजीयत येन शङ्खः ॥१॥[4]

तावद्वीलाकवलितसरित् तावदुत्कल्लिहोर्मि-
स्तावत् तीव्रध्वनितमुखरस्तावदज्ञातसीमा ।
तावत् प्रेङ्खत्कमठमकरव्यूहबन्धुः ससिन्धु-
र्लोपामुद्रासहचरकरक्रोडवर्ती न यावत् ॥१॥[5]

ततश्चोक्षवाटि-जोनिचितकवाटयो पार्थक्यं कृतम् । मन्त्रिणा आ महाराष्ट्रेभ्यः साधिता भूः । 'वेला'कूलीयनरेन्द्राणां नरेन्द्रान्त-राक्रम्यमाणानां मन्त्री प्रतिग्रहप्रेषणेन सान्निध्यं कृत्वा जयश्रियं अर्पयति । इति कारणात् ते तुष्टा [7]बोहित्थानि सारवस्तुपूर्णानि प्राभृते प्रहिण्वन्ति । अम्बिका-कपर्दिनौ निधानभुवं रात्रौ समागत्य कथयतः । ते निधयो मन्त्रिणा खातं खातं गृह्यन्ते । तद्भाग्याद् दुर्भिक्षस्य नामापि नाभूत् । विड्वराणि दूरे नष्टानि । मुद्गल-बलानि वारंवारमागच्छन्ति जघ्निरे एकदा, पुनर्नाययुः । पल्लीयनेषु दुकूलानि नागोदराणि च बद्धानि । प्रहीता कोऽपि न । ग्रामे ग्रामे

---

१ ग-सैदसदनम् । २ ख-घ 'खात' । ३ घ-'लोकश्च दर्शनमहर्षिप्रलोकश्च । ततः स्तुतिः' । ४ उपजातिः । ५ ख-'बद्धी' । ६ मन्दाक्रान्ता । ७ नावः ।

मण्डितानि सत्राणि । सत्रे सत्रे मिष्टान्नानि । उपरि ताम्बूलानि च । तत्र ग्लानार्थं नेवा विविधा प्रस्थापिता । मन्त्रिव्यवस्थया दर्शनद्वेषो न । वर्णद्वेषो न । प्रतिवर्षं स्वदेशे सर्वनगरेषु वारतिस्रस्तिस्र श्वेताम्बरेभ्य प्रतिलाभना शेषदर्शनानामभ्यर्चा । मन्त्रिश्रीवस्तुपालस्य पत्न्यौ द्वे ललितादेवि(वी)-सोखूनाम्न्यौ कल्पवल्लिकामधेनू इव । ललि- ५
तादेव्याः सुतो मन्त्रिजयन्तसिंहः सूहवदेवि(वी)जानि प्रत्यक्षचिन्तामणि । तेजःपालदयिताऽनुपमाऽनुपमैव । पठितं च कविना—

लक्ष्मीश्चला शिवा चण्डी, शची सापत्न्यदूषिता ।
गङ्गा न्यग्गामिनी वाणी, वाक्साराऽनुपमा ततः ॥१॥[4]

श्री'शत्रुञ्जया'दिषु 'नन्दीश्वरे'न्द्रमण्डपप्रभृतिकर्मस्थाया प्रारम्भि- १०
षत । आरासणादिदलिकानि स्थलपथेन जलपथेन च तत्र तत्र प्राप्यन्ते । तपसामुद्यापनानां च प्रकाश ।

एकदा तौ भ्रातरौ द्वावपि मन्त्रिपुरन्दरौ महर्द्धिसङ्घोपेतौ श्रीपार्श्वं नन्तु 'स्तम्भनक'पुरमीयतु । प्रथमदिने ससङ्घौ तौ श्रीपार्श्वस्य पुर श्रावकश्रेणिपुरःसरौ स्थितौ । तदा गीतगान- १५
रासादिमहारस प्रवर्तते । तदवसरे तत्रत्यसङ्घोपरोधात् तत्रत्याध्यक्षा सूरयो मल्लवादिन समाकारिता । ते यावद् देवगृह प्रविशन्ति तावत् पेठन्ति—

अस्मिन्नसारे ससारे सार सारङ्गलोचना ।

मन्त्रिभ्या श्रुत चिन्तित च—अहो मठपतिगृहवद् देवगृहेऽपि २०
शृङ्गाराङ्गारगर्भं पदद्वय कथयन्नस्तीति । देवनमस्कारादिकमुचितमिह तन्नाधीते, तस्मादहृष्टव्योऽसौ । उपविष्ट सूरि स । अन्येऽपि सूरय शतश पङ्क्तौ निषण्णा । मङ्गलदीपान्तेऽपरसूरिभिर्मल्लवादिन एवाऽऽशीर्वादाय प्रेरिता । मन्त्री पुरस्तिष्ठति । 'अस्मिन्नसारे ससारे सार' इत्यादि पादद्वय भणित तै व्याख्यात च तदेव । २५

१ ग-'ताम्बूलानि वय दर्शन०' । २ घ-'सवी' । ३ क-गस '। ४ अनुष्टुप् । ५ ग-तरेव पठिनम् । ६ ख-पद्य प्रस्तावि । ७ ग-'तत् किं मा०' ।

मन्त्री हस्तेन वन्दित्वा निरक्तो गतः स्वोत्तारकम् । एवं दिनाः पचार्धपीठश्च । मन्त्र्यपज्ञा चारोहत् प्रकर्षे । अष्टम्यां रात्रौ मन्त्री मुत्कलापनिकां कर्तुं देवरङ्गमण्डपे निविष्ट । पुरो धनद्रव्यकाणां राशय । कोऽपि कविराह—

५ श्रीवस्तुपाल ! तव भाल्तले जिनाज्ञा
वाणी मुखे हृदि कृपा करपल्लवे श्री ।
देहे द्युतिर्विलसतीति रुषेव कीर्ति
पैतामह सपदि धाम जगाम नाम ॥१॥

अपरस्तु—

१० अनिस्सरन्तीमपि गेहगर्भात्, कीर्ति परेषामसतीं वदन्ति ।
स्वैर भ्रमन्तीमपि वस्तुपाल !, त्वत्कीर्तिमाहु कथय सतीं तु ।२।[१]

इतरस्तु—

सेयं समुद्रवसना तव दानकीर्ति
पूरोत्तरीयपिहिताथयना समन्तात् ।
१५ अद्यापि कर्णविकलेति न लक्ष्यते यत्
तन्नाद्भुत सचिवपुङ्गव ! वस्तुपाल ! ॥ ३ ॥[४]

[५]कश्चित् तु—

क्रमेण मन्दीकृतकर्णशक्ति , प्रकाशयन्ती च बलिस्वभावम् ।
वैर्नानुभूता सशिर प्रकम्प,जरेन दत्तिस्तव वस्तुपाल ! ।।४।।[६]

२० तेभ्य धनिभ्य सहस्रलक्षाणि ददिरे । एव गायनभट्टादिभ्योऽपि । यावज्जान प्रातरेव तदा मल्लनादिभि स्वसेवकाश्चैत्यद्वारद्वयेऽपि नियुक्ता । एक द्वार अन्यदिशि एक च मठदिशि । उक्त च तेभ्य - मन्त्री चैत्यान्नि सरन् ज्ञापनीय । क्षणेन वस्तुपालो मठद्वारान्निर्गच्छति यावत् तावता सेवकज्ञापिता सुरय समागत्य सम्मुखा

१ ग पाठश्चक नवनवभन्त्या (?) ... । अष्ट० । २ वसन्त० । ३ उपजाति । ४ वसन्त० । ५ ग–'पुनः कश्चिद्‌तु' । ६ उपजाति । ७ ग–'धारित तैभ्य' ।

स्थिता । मन्त्रिणा रीढया श्रुप्रणाम इव कृत । आचार्यैरभिहितम्—

दूरे कर्णरसायन निकटतस्तृष्णाऽपि नो शाम्यति ।

विनीयताम् । तीर्थानि पूज्यन्ताम् । मन्त्री कौतुकात् तथैव तस्थौ, किं पर्यवसानोय प्रस्तावनेति ध्यानात् । ऊचे च—न विद्म परमार्थं किमेतदभिधद्ध्वे । आचार्यैरुक्तम्—पुरो गम्यता गम्यताम् । भवता ५ कार्याणि भूयांसि । मन्त्री सविशेष पृच्छति । सूरयो वदन्ति—सचिवेन्द्र ! श्रूयताम्—

'मरु'ग्रामे क्वचित् ग्रामाराः स्थूलबहुला लोमशा पशवो वसन्ति । पर्षदि निषीदन्ति । कपोलझल्लरीं वादयन्ति । तत्रैकदा 'वेल'कूलीयचर पान्थ आगमत् । नवीन इति कृत्वा ग्राम्यैराहूत । १० पृष्ट —त्व क [1] क्वत्य [2] । तेनोक्तम्—अह समुद्रतटेऽवा त्सम् । पान्थ पुरो यामि । तै पृष्टम्—समुद्र केन खानित [3] । तेनोचे—स्वयम्भू । पुनस्तै पृष्टम्—कियान् स [?] । पान्थेनोक्तम्—अलब्धपार । किं तत्रास्ति इति पृष्टे पुनस्तेनाचख्ये—

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मी पयोमानुषी १५
मुक्तौघा सिकता प्रवाललतिका सेवालमम्भ सुधा ।
तीरे कल्पमहीरुहा किमपर नाम्नाऽपि रत्नाकर [4]

इति पादत्रय पठित्वा व्याख्याय पुरो गत पान्थ । तेषु ग्राम्ये ष्वेक सकौतुक पृच्छ पृच्छ समुद्रतटमगात् । दृष्ट कल्लोलमाला-चुम्बितगगनाग्र समुद्र । तुष्ट स । अचिन्तयच्च—इतो रूद्रय २० सर्वा लप्स्यन्ते । प्रथम तृषित सलिल पिबामि । इति गत्वा पीत तत् । दग्ध कोष्ठ । तेत पठति इति—

दूरे कर्णरसायन निकटतस्तृष्णाऽपि नो शाम्यति ।

---

१ ग–'प्रभुप्रणाम' । २ ग–'वस्त्भी (?)' । ३ क–'खनातते' । ४ शार्दूल० । ५ ग–'वेन' ।

वरि नियरा(रया ?) जहिं जणु पियइ घुट्टु घुट्टु चुलुएहिं ।
सायरि अत्थि बहुतु जलु छइ खारु किं तेण ? ॥१॥

तैरेव पदैर्नष्ट स्वास्पद गत । तया वयमपि स्म । मन्त्रिणो क्तम्—कथ तथा यूय यथा स ग्राम्य ? । सूरयस्तारमूचु — महामात्य ! वयमत्र श्रीपार्श्वनाथसेवका त्रैविद्यविद सर्वर्थय अत्रस्था शृणुम, यथा—'धवलक्क' श्रीवस्तुपालो मन्त्री सरस्वतीकण्ठाभरणो भारतीप्रतिपन्नपुत्रो विद्वज्जनमधुकरसहकार सारासारविचारवेधास्ते । इति तदुत्कण्ठितास्तत्रागन्तुम् । ईश्वरत्वाच्च न गच्छाम क्वापि । पुनश्चिन्तित च कदाचिदत्र तीर्थनत्यै एतात्र मन्त्री । तस्य पुरो वक्ष्याम स्वैर सूक्तानि । इति ध्यायतामस्माक मन्त्रिमिश्रा अत्रागता । यावत् पठयते किमपि तावदसत्सम्भावनयाऽवज्ञापरा यूय स्थिता । तत किं पठ्यते ? । गच्छत गच्छत, उत्सूर भवति । मन्त्री प्राह— मम मन्तु क्षम्यता, किमेतत् पठितुमारेभे भवद्भि ? । आचार्या जगदु —देव ! यदा युवा बा-धवौ श्रावकश्रेण्यमे राजराजेश्वरौ दिव्यभूषणौ श्रावकाश्च धनाढया दृष्टा गीताद्युच्छ्रयश्च तदा एतत्स्वचित्ते बभूव—जगति स्त्रीजातिरेव ध-या यद्गर्भे जिनचक्रवर्ति-धचक्रिनल-कर्ण-युधिष्ठिर विक्रम सातवाहनादयो जाता । सम्प्रत्यपि ईदृशा सन्ति। तस्मात् श्रीसाम्ब-श्रीशान्ति ब्रह्मनाग आमदत्त नागडवरश्रीआभूनन्दिनी कुमारा देवी श्लाघ्या यया एतौ कलियुगमहान्धकारमग्नजिनधर्मप्रकाशनप्रदीपौ ईदृशौ नन्दनौ जातौ । इत्येव चिन्तयतामस्माक पद्यपादद्वय वदनादुद्गतम् । जिननमस्कारादि विस्मृतम् । पश्चार्द्धं तु शृणुत ।

यत्कुक्षिप्रभवा एते, वस्तुपाल ! मवादृशा ॥ १ ॥

---

१ छाया-वर लघुजलप्रवाह (?) यत्र जन पिबति घुट्टु घुन्टु(शब्दं) चुलकै ।
सागरेऽस्ति बहु बल्मस्ति क्षार किं तेन ? ॥

२ ग पुस्तके 'अनरथा' इत्यधिक पाठ । ३ घ 'अभ्यागता' । ४ ग- ममापराध' ।
५ क-'मग्नधर्मदीपौ' । ६ अनुष्टुप् ।

सविस्तरतर व्याख्यान कृतम् । लज्जित सचिवेन्द्र । पादौ लगित्वा सूरीन् क्षमयित्वा [1]चलित । क्रोशान्ते ग्राम एक आगात् । तत्र स्नातभुक्तविलिप्त. । तदनु स्वभृत्य सचिवमेकमाकार्य आदिक्षत् । द्वय वाहिनी हेमसहस्रदशबदरकयुक् सूरिभ्यो मठे देया । गतो मन्त्रिसेवकस्तत्र । भाषिता सूरय । मन्त्रिदत्तमिदमवधार्यताम् । ५
आचार्यैर्दृष्टम् । अश्वमारुह्य भटशतोल्लालितकृपाणजलप्लावितरवास्तत्र गता यत्र श्रीवस्तुपालः । उदितश्च तै —मन्त्रिन् ! किमहमुचितभाषी ? किं चारण ? किं वा बन्दी ? किं नु सर्वसिद्धान्तपारग सम्यग् जैनसूरि ? । मया मन प्रमोदेन यद् [2]व उपश्लोकनमुक्त तन्मूल्यभूतामिमां वो दत्तिं कथ गृह्णामि ? । न मयेद वित्ताया- १०
मिहितम् । किन्त्विद अन्तर्मनस ध्यात्वा भणित यथाऽद्यापि जयति जिनपतिमतम् । मन्त्री प्राह—भवन्तो निःस्पृहत्वान्न गृह्णन्ति । वय तु दत्तत्वान्न प्रतिगृह्णीम । तर्हि कथमनेन हेम्ना भवितव्यमिति शिक्षा दत्त । तत सूरिभिर्जगदे जगदेकदानी मन्त्री—स्वगृहाय सम्प्रति गम्यते भवद्भिस्तीर्थाय कस्मैचिद् वा ? । मन्त्री आह—प्रभो ! १५
'भृगुपुर' श्रीसुव्रततीर्थवन्दनार्थं गच्छन्त स्म । आचार्या प्राहु — तर्हि लब्ध इदहेमव्ययोपाय । तत्र लेप्यमयी प्रतिमाऽऽस्ते । तत्र स्नात्रसुखासिका न[5] पूर्यते श्रावकाणाम् । तस्मादनेन हेममयीं स्नात्रप्रतिमा निर्मापयत । मन्त्रिणो ध्वनित मन । तत् तथैव च कृतम् । तत समायात स्वसदन 'गूर्जर'[6]मन्त्री । २०

अन्येद्युरादर्शे प्रातर्वदन पश्यता सचिवेन पलितमेकमालोकि अपाठि च ।

अधीता न कला काचित्, न च किञ्चित् कृत तप ।

---

१ 'चलित इत्यधिको ग–पाठ । २ युष्माकम् । ३ 'तीर्थोद्धारकस्य एवविध पुरुषरत्नै धन इत्यधिको ग–पाठ । ४ ग–'दानवीर ! मन्त्रिन् !' । ५ घ–निपूर्यते । ६ ख–घ–'गूर्जरेश्वरमन्त्री' ।

दत्तं न किञ्चित् पात्रेभ्यो, गतं च मधुरं वयः ॥१॥[1]

आयुर्यौवनवित्तेषु, स्मृतिशेषेषु या मतिः ।
सेव चेज्जायते पूर्वं, न दूरे परमं पदम् ॥२॥[2]

आरोहन्ती शिरः स्कान्ता–दौद्धत्यं तनुते जरा ।
५ शिरसः स्कन्तमायान्ती, दिशते नीचतां पुनः ॥३॥[3]

लोकः पृच्छति मे वार्ता, शरीरे कुशलं तव ।
कुतः कुशलमस्माक–मायुर्याति दिने दिने ॥४॥[4]

ततोऽधिकं जिनधर्मे रेमे ।

अथैकदा द्वावपि भ्रातरौ राणश्रीवीरधवलं व्यजिज्ञपताम्—
१० देव ! देवपादैरिय 'गूर्जर'धरा साधिता, राष्ट्रान्तराणि करदानि कृतानि, यथादेशः स्यात् तदा राज्याभिषेकोत्सवः क्रियते । राणकेनोक्तम्—मन्त्रिणौ ! ऋजू भक्तिजडौ युवाम् ।

अजित्वा सार्णवामुर्वी–मनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो, भवेयं पार्थिवः कथम् ? ॥१॥[5]

१५ ततो राणवमात्रवमेवास्तु । इत्युक्त्वा व्यसृजत् तौ ।

एकदा मन्त्रिभ्यां श्रीसोमेश्वरादिकविभ्यो निपुणा वृत्तिः कृता भूम्यादिदानैः । ततः पठितं सोमेश्वरेण—

सूत्रे वृत्तिः कृता पूर्वं, दुर्गसिंहेन धीमता ।
विसूत्रे तु कृताऽस्माकं, वस्तुपालेन मन्त्रिणा ॥१॥[6]

२० श्रीवीरधवलोऽपि सेवकान् प्रभुपदवीमारोपयन् जगत्प्रियोऽभूत् । किमुच्यते तस्य[7] । पश्यत पश्यत श्रीवीरधवलो ग्रीष्मे चन्द्रशालायां सुप्तोऽस्ति । षण्ठधरणौ चम्पयत्येकः । राणकः पटीपिहितवदनो जाग्रदपि षण्ठेन सुप्तो मेने । ततश्च रणाङ्गुलिस्था रत्नाङ्का मुद्रा जगृहे । मुखे च चिक्षिपे । राणेन किमपि
२५ नोक्तम् । उत्थितो राणः । भाण्डागारिकपार्श्वाद् गृहीत्वाऽन्या मुद्रा

१–६ अनुष्टुप् । ७ ग 'राणकेन' ।

तादृगेव पादाङ्गुली स्थापिता । द्वितीयदिने पुनः राणस्तत्रैव चन्द्र-
शालायां प्रसुप्तः । वण्ठश्चरणौ चम्पयति । राणकस्तथैव पटीस्थगितव-
दनोऽस्ति । वण्ठः पुनः पुनः मुद्रामालोकते । अहो प्राक्तनी चेयम् ।
ततो राणेन्द्रः प्राह–भो वण्ठ ! इमां तु मुद्रां मा ग्रहीः ; या कल्ये
गृहीता सा गृहीता । एतद्वचनाकर्णन एव वण्ठो भीत्या वज्राहत　५
इवास्थात् । यतः –

हसन्नपि नृपो हन्ति, मानयन्नपि दुर्जनः ।

स्पृशन्नपि गजो हन्ति, जिघ्रन्नपि भुजङ्गमः ॥ १ ॥[1]

ता तस्य दीनता दृष्ट्वा [2]राणेन भणितम्–वत्स ! मा भैषीः । अस्माक-
मेवाय कार्पण्यजो दोषो येन तेऽल्पा वृत्तिः । इच्छा न पूर्यते । १०
ततो वद्धपाये चौर्ये बुद्धिः । अतः परं हय आरोहाय दीयमानोऽस्ति,
लक्षार्धं वृत्तौ । इत्याश्वासितः सः ।

अतो वीरधवलः क्ष्मापरत्वाजगद्वल्लभः सेवकसदाफलत्वेन
पप्रथे । स सहजदयार्द्र इति कारणान्मन्त्रिभ्यां रहः कथान्तरे 'शान्ति'-
पर्वणि द्वैपायनोक्तभीष्मयुधिष्ठिरोपदेशद्वारायातं द्वैपायनोक्त- १५
द्वात्रिंशदधिकारगर्भेतिहासशास्त्रीयाद्याविंशाधिकारस्थं शिवपुराण-
मध्यगतं च मांसपरिहारं व्याख्याय व्याख्याय प्रायो मांस-मद्य मृग
यानिमुखकृतः । पुनः'मलधारि'श्रीदेवप्रभसूरिसाविधे व्याख्या श्राव
श्रावं सविशेषं तेन तत्त्वपरिमलितमतिर्निरचित ।

अन्येद्युर्वस्तुपालो ब्राह्मे मुहूर्ते निमृशति–यद्यर्हद्यात्रा विस्तरेण २०
क्रियते तदा श्रीः फलवती भवेत् ।

वञ्चयित्वा जनानेतान्, सुकृतं गृह्यते श्रिया ।

तत्त्वतो गृह्यते येन, स तु धूर्तधुरन्धरः ॥ १ ॥[3]

---

१ ग– पुस्तके ' स एव ' इत्यधिकम् । २ अनुष्टुप् । ३ ग– ' राणकेन ' ।
* ग पुस्तके तु पद्यमिदम् –

'क्षीणा क्षीणा च ये वश्या–स्तेऽन्यस्य पुरुषाधमाः ।
श्रियं नियन्ति यद्वश्या–स्तेऽन्यस्य पुरुषोत्तमाः ॥१॥' ५ अनुष्टुप् ।

नृपव्यापारपापेभ्य , सुकृत स्वीकृत न यै ।
तान् धूलिधावकेभ्योऽपि, मन्ये मूढतरान् नरान् ॥ २ ॥'

इत्यादि विमृश्य तेज पालेन निस्तभक्तेन साम्मत्य कृत्वा 'मलधारि' श्रीनरचन्द्रसूरिपादानपृच्छत्–भगवन् ! या मे चिन्ताऽधुना सा
५ निष्प्रत्यूह सेत्स्यति ? । प्रभुभि शास्त्रज्ञकिरीटैरुक्तम्–जिनयात्रा चिन्ता वर्तते, सा सेत्स्यति । वस्तुपालेन गदितम्–तर्हि देवालये 'वासनिक्षेप क्रियताम्। श्रीनरचन्द्रसूरय प्राहु –मन्त्रीश ! वय ते मातृपक्षे गुरव , न पितृपक्षे । पितृपक्षे तु 'नागेन्द्र'गच्छीया श्रीअमरचन्द्रसूरिश्रीमाहेन्द्रसूरिपदे श्रीविजयसेनसूरय उदय-
१० प्रभसूरिसञ्ज्ञकदिव्यपुजो विशालगच्छा 'पीलूआई'देशे वर्तन्ते ते वासनिक्षेप कुर्वन्तु, पर न वयम् । यदुक्तम्—

जैा जस्स ठिई जा जस्स सतई पुव्वपुरिसकयमेरा ।
कठ्ठिए वि जीए सा तेण न लंघियव्व त्ति ॥१॥'

अथ मन्त्र्याह–अस्माभिर्भवदन्तिके त्रैविधषडावश्यक-कर्मप्रकृत्या-
१५ धीतम् । यूयमेव गुरव । प्रभुभिरुक्तम्–नैव वाच्यम्, लोभपि शाचप्रवेशप्रसङ्गात् । तता मन्त्रिभ्या 'मरु'देशाद् गुरव शीघ्रमा नायिता । मुहूर्तप्रतिष्ठादेवालयप्रस्थापन वासनिक्षेपण कुलगुरुभि कृतम् । साधर्मिकवात्सल्य शान्तिक मारिवारण स्वामिपूजन छेक रक्षन चैत्यपरिपाटापर्यटन च विहितम् । अथ प्रतिलाभना । तत्र
२० मिलिता कवीश्वरा नरेश्वरा सङ्घेश्वरा । दत्तानि कौशेय कटक कुण्डल हारादीनि लोकेभ्य । यतिपतिभ्यस्तु तदुचितानि वस्त्र कम्बल-भोज्यादीनि । तदा श्रीनरचन्द्रसूरिभि सङ्घानुज्ञातैर्व्यादया कृता ।

---

१ अनुष्टुप् । २ ग–'वासक्षेप । 
३ छाया–या यस्य स्थितिर्या यस्य स ठति पूर्वपुरुषकृता मर्यादा ।
कण्ठस्थितेऽपि जीवे सा तेन न लङ्घितव्येति ॥ ४ आर्या ।
५ ग– कौशेयकटक०' ।

चौलुक्यः परमार्हतो नृपशतस्वामी जिनेन्द्राज्ञया
निर्ग्रन्थाय जनाय दानमनघं न प्राप जानन्नपि ।
स प्राप्तस्त्रिदिवं स्वचारुचरितैः सत्पात्रदानेच्छया
त्वद्रूपोऽवततार 'गूर्जर'भुवि श्रीवस्तुपालो ध्रुवम् ॥१[1]

ध्वनित सङ्घ । अथ चलित सुशकुनैः ससङ्घो मन्त्री । मार्गे ५
ससक्षेत्राण्युद्धरन् श्री'वर्धमान'पुरासन्नमावासित । 'वर्धमान'पुरमध्ये
तदा बहुजनमान्यः श्रीमान् रत्ननामा श्रावको वसति । तद्गृहे
दक्षिणावर्तः शङ्ख पूज्यते । स रात्रौ करण्डान्निर्गत्य स्निग्ध
गम्भीरं घुंघुमायते नृत्यति च । तत्प्रभावात् तस्य गृहे चतुरङ्गा
लक्ष्मी । शङ्खेन रात्रौ रत्न आलेपे—तव गृहेऽहं चिरमस्थाम् । १०
इदानीं तव पुण्यमल्पम् । मां श्रीवस्तुपालपुरुषोत्तमकरपङ्कजप्रण
यिनं कुरु । सत्पात्रे मद्दानात् त्वमपीह परत्र च सुखी भवे । व्यक्त
तज्ज्ञात्वा रत्नो विपुलसामग्र्याऽभिमुखो गत्वा मन्त्रीशं ससङ्घ
निमन्त्र्य स्वगृहे बहुपरिकरं भोजयित्वा परिधाप्योचे— एवमेव
शङ्खादेशो मे । गृहाणमम् । मन्त्र्याह—न वय परधनार्थिन । १५
पिशुनाच्छङ्खसत्तां ज्ञात्वा त ग्रहीष्यति स्वयं मन्त्री, तस्मात् स्वय-
मेव ददामीत्यपि मा शङ्किष्ठा , निर्लोभत्वादस्माकमस्मत्प्रभूणा
च । इत्युक्त्वा विरते मन्त्रिणि रत्नेन गदितम्—देव । मद्गृहावस्था
नमस्मै न रोचते । ततः किं क्रियते [2], गृहाणैव । ततो गृहीतो
मन्त्रिणा शङ्ख । तत्प्रभावोऽनन्त । शनै शनैः सङ्घ श्री'श २०
त्रुञ्जय'तलहट्टिकामाट । तत्र ललितासर प्रासादादिकीर्तनानि पश्यन्
प्रमुदित ससङ्घ सचिव । आरूढ 'शत्रुञ्जया'द्रिं विवेक च भाव
च । तत्र मन्त्री प्रथमं ऋषभं वन्दते । तदा काव्यपाठ —

---

१ शार्दूल० । २ ग–' गेह । ३ ग–' घुमुघुमा०', घ–' घुलघुमा०' ।
४ ग भव तस्याभिप्राय व्यक्त' । ५ तळेटी इति भाषायाम् । ६ ग–'हट्टिका
मात' ।

आस्यं कस्य न वीक्षितं ? क न कृता सेवा ? न के वा स्तुताः ?
तृष्णापूरपराहतेन विहिता केषां च नाभ्यर्थना ? ।
तत् त्रात'र्विमला'दिनन्दनवना कल्पैककल्पद्रुम !
त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे ॥ १ ॥[१]

५ अथावारितसत्रमेरुध्वजारोपणेन्द्रपदार्थिरञ्जनादीनि कर्तव्यानि विहितानि । देवेभ्यो हैमानि आरात्रिक-तिलकादीनि दत्तानि । कुङ्कुम-कर्पूरा-ऽगुरु-मृगमद-चन्दन-कुसुम-परिमैलमिलदलिकुलझङ्कारभारपूरितमिव गगनमभवत् । गीतरासध्वनिभिर्दिक्कुहराणि अभिधन्त । पूर्वे मन्त्रिश्रीउदयनदत्ता देवदायाः सर्वेऽपि सविशेषाः

१० कृताः । देवद्रव्यनाशनिषेधार्थं चत्वारि श्रावककुलानि अद्यौ मुक्तानि । अनुपमा दानाधिकारिणी[२] । तस्याः साधुभ्यो दानानि ददत्याः किल महति वृन्दे पतता धृतवड्डहट्टकेन क्षौमाण्यभ्युक्तानि । तदा याष्टिकेन कडहड्भृते साधवे यष्टिप्रहारलेशो दत्तः । मन्त्रिण्या देशनिर्वासनं समादिष्टम् । भणितं च–रे न वेत्सि यदहं तैलिकपत्नी

१५ वान्दविकपत्नी वाऽभविष्यं तदा प्रतिपदं तैलघृताभिव्यङ्गान्मलिनान्येव वासांस्यभविष्यन् । एवं तु यत्साम्यङ्गी भाग्यलभ्यः दर्शनप्रसादादेव स्यात् । य इदं न मन्यते तेन नः कार्यमेव न । इत्युक्तं च । अहो दर्शनभक्तिरिति ध्वनितं सर्वम् ।

एकदा मन्त्रीश्वरो नाभेयपुर आरात्रिके स्थितोऽस्ति दिव्यधवल-

२० वासाश्चान्दनतिलको दिव्यपदकहारभूषितोरस्थलः । सूरीणां यतीनां श्रावकश्राविकाणां च नतिः । तिलकं तिलकोपरि । पुष्पस्रक् पुष्पस्रगुपरि । तदा सूत्रधारेणैकेन दारवी कुमारदेव्या मातुर्मूर्तिर्मन्त्र(?)कापनवीनघटिता दृष्टौ कृता । उक्तं च तेन–मातुर्मूर्तिरियम् । तदा मन्त्रीश्वरेणाशिरानखं दृष्टा मूर्तिः । दृष्ट्वा च

१ ग-'दृष्ट-', घ-'दृष्टं' । १ शार्दूल० । २ ग-'आभरणानि तिलका०' । ४ ग-'मलदिउ०' । ५ 'कृत्वाऽस्ति' इत्यधिको ग-पाठः । ६ घ-'कन्दविकी वा' । ७ घ-'मतः' । ८ काष्ठमयी ।

रुदितं प्रथममश्रुमात्रं, ततोऽव्यक्त इतरो ध्वनिः, ततो व्यक्ततरः। सर्वे तटस्थाः पृच्छन्ति–देव! किं कारणं रुद्यते ?। हर्षस्थाने को विषादः ?। श्रुतशील इव नलस्य, उद्धव इव विष्णोः, अभय इव श्रेणिकस्य, [1]कल्पक इव नन्दस्य, जाम्बक इव वनराजस्य, विद्याधर इव जयन्तराजस्य, आलिग इव सिद्धराजस्य, उदयन इव कुमारपालस्य त्वं मन्त्री वीरधवलस्य। विपक्षीताः पर्वता इव सागरं त्वामाश्रयन्ति भूपाः। तार्क्ष्येणेव पन्नगास्त्वया हताः सपत्नाः पृथिवीपालाः। चन्द्राय इव चकोरास्तुभ्यं स्पृहयन्ति स्वजनाः। हिमवत इव गङ्गा त्वत्प्रभवति राजनीतिः। भानोरिव पश्चात्तवोदयमीहन्ते सूरयः। विष्णाविव त्वयि रमते श्रीः। तन्नास्ति यन्नास्ति ते। एवं सति किमर्थं दुःखं [2]ध्रियते ?। ततो मन्त्रिणोक्तम्–इदं दुःखं यन्मे भाग्यं सङ्घाधिपत्यादिविभूतिर्मातृमरणादनन्तरं सम्पन्ना, यदि तु सा मे माता इदानीं स्यात्, तदा स्वहस्तेन मङ्गलानि कुर्वत्यास्तस्या मम च मङ्गलानि कारयतः पश्यतश्च लोकस्य कियत् सुखं भवेत्?। परं किं कुर्मः?। धात्रा हताः स्मः, एकैकन्यूनीकरणेन। ततः श्रीनरचन्द्रसूरिभि'र्मलधारि'भिरभिहितम्–मन्त्रीश्वर! यथा त्वं सचिवेषु तथाऽत्र देशे प्रधानराजसु सिद्धराजो [3]व्यजीयत। स मालवेन्द्रं जित्वा 'पत्तन'मागतो मङ्गलेषु क्रियमाणेष्वपाठीद्, यथा–

> माऽस्म सीमन्तिनी कापि, जनयेत् सुतमीदृशम्।
> गृहद्भाग्यफलं यस्य, मृतमातुरनन्तरम् ॥१॥[*]

तस्माद् हृदयं अधःकृत्वा स्थीयते विवेकिभिः। न सर्वेऽपि नृणां मनोरथाः प्रपूर्यन्ते। इत्याद्युक्त्या मन्त्री चलदारात्रिकमङ्गलदीपादि कारितः। ततो चैत्यवन्दना गुरुवन्दनं च। तदा श्रीनरचन्द्रसूरिभिराशीर्दत्ता–

---

१ घ–'कल्यक'। २ 'एव॰ म्रियते' इति ग-पाठः। ३ घ–'व्यजयत'।
* अनुष्टुप्।

तवोपकुर्वतो धर्मे, तस्य त्वामुपकुर्वतः।
**वस्तुपाल**! द्वयोरस्तु, युक्त एव समागमः ॥१॥[2]

इत्यादि। अथ रात्रौ तन्मयतया नाभेयपूजाप्यानदानपूजाः। तदा कवयः पठन्ति। एकः कश्चित्—

५ ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्बणा-
स्तेऽपि द्रव्यकणाय मर्त्यमपणा जिह्वे भवत्या स्तुताः।
तस्मात् त्वं तदघापघातविधये बद्धादरा सम्प्रति
श्रेयःस्थानविधानधिक्कृतकलिं श्री**वस्तुपालं** स्तुहि ॥१॥[3]

अपरस्तु—

१० [4]सूरो रणेषु [5]चरणप्रणतेषु सोमो
[6]वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे।
नीतौ गुरुः कविजने [7]कविरक्रियासु।
[8]मन्दोऽपि च ग्रहमयो न हि **वस्तुपालः** ॥२॥[9]

अन्यस्तु—

१५ श्री**भोज**वदनाम्भोज-वियोगविधुरं मनः।
श्री**वस्तुपाल**वक्त्रेन्दौ, विनोदयति भारती ॥३॥[10]

इतरस्तु—

श्रीवासाम्बुजमानने परिणतं पञ्चाङ्गुलिच्छद्मतो
जग्मुर्दक्षिणपक्षशाखगतां [11]पञ्चापि देवद्रुमाः।
२० वाञ्छापूरणकारणं प्रणयिनां जिह्वेव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्री**वस्तुपालस्य** तत् ॥४॥

सर्वेषां लक्षदानम्। अष्टाह्निकायां गतायां **ऋषभदेवं** गद्गदोक्त्या मन्त्री आपृच्छत—

त्वत्प्रसादश्रुते नाहे, वसन् शृण्वन् गुणांस्तव।

---

१ ग-'कुर्वते'। २ अनुष्टुप्। ३ शार्दूल०। ४ सूर्यः। ५ ख-'चरणे प्रणतेषु'। ६ वक्रः। ७ शुक्रः। ८ शनि। ९ वस० ति०। १० अनुष्टुप्। ११ मन्दार पारिजातक सन्तान-कल्प-हरिचन्दनेति।

सङ्घदर्शनतुष्टात्मा, भूयांसं विहगोऽप्यहम् ॥५॥
यद् दाये द्यूतकारस्य, यत् प्रियायां वियोगिनः ।
यद् राधावेधिनो लक्ष्ये, तद् ध्यानं मेऽस्तु ते मते ॥६॥[2]

इत्याद्यकथयत् । एवं सङ्घोऽपि चलितः । ससङ्घः सचिवः मरुदेवा-शिखरादग्रे यावत् कियदपि याति तावत् श्रमजस्वेदक्लिन्न-गात्रवसनान् कत्यपि मालिकान् पुष्पकरण्डकभारितशिरसोऽपश्यत् । पृष्टास्ते—कथमुत्सुका इव यूयम्? । तैर्विज्ञप्तम्—देव! वयं दूराद् पुष्पाण्याहार्ष्म । सङ्घः किल 'शत्रुञ्जय'शिखरेऽस्ति । प्रकृष्टं मूल्यं लप्स्यामहे । तत् पुनरन्यथा [3]वृत्तम् । सङ्घश्चलितः । तस्माद-भाग्या वयमिति । तेषां दैन्यं दृष्ट्वा मन्त्रिणाऽभाणि—अत्रैव स्थीय-तामूर्ध्वैः क्षणम् । तावता पाश्चात्यं सर्वमायातम् । श्रीवस्तुपालेन स्वकुटुम्बं सङ्घश्चाभाण्यताम्, यथा—भो धन्याः! सर्वेषां पूर्णस्तीर्थ-वन्दनपूजाभिलाषः? । लोकेनोक्तम्—भवत्प्रसादात् पूर्णः । मन्त्र्याह—किमपि तीर्थमपूजितं स्थितमस्ति? । लोकः प्राह—प्रत्येकं सर्वाणि तीर्थानि पूजितानि ध्यातानि । मन्त्रिमहेन्द्रः प्राह—यद् विस्मृतं तन्न जानीथ यूयम्; वयं स्मारयामः । सङ्घो वदति—किं विस्मृतम्? । मन्त्री [4]वदति—भो लोकाः! पूर्वं तीर्थमयं पर्वतः यत्र स्वयमृषभदेवः समवासार्षीत् । ततो नेमिवर्जिता द्वाविंशतिर्जिनाः समवासार्षुः[5] । असङ्ख्याः सिद्धाश्च यत्र सोऽद्रिः कथं न तीर्थम्? । लोकोऽ-प्याह—सत्यं तीर्थमयं पर्वतः । तर्हि पूज्यताम् । पुष्पादीनि क्वेति चेदकथयिष्यन् तदा इमे मालिका इमानि पुष्पाणि वः पुण्यैरुपा-स्थिषतेति । ततः सङ्घेन तानि पुष्पाणि गृहीत्वाऽद्रिपूजा कृता । [6]द्रम्मेण पुष्पं जातम् । नालिकेरास्फालनवस्त्रदानादिकेव्ययश्च । तुष्टा मालिकाः । एवं पराशामङ्गपराङ्मुख आसराजभूः । ततः शनैः शनैः पशुतुरङ्गगरिष्ठायपीडया सङ्घो 'रैवतक'मारुरोह च । नेमिनि

१–२ अनुष्टुप् । ३ ग–'जातम्' । ४ ग–'वदति' । ५ क–'त्रयोविंशति॰' । ६ 'द्रम्मे॰ जातम्' इत्यधिको ग–पाठः । ७ नालकमसुख॰ ।

दृष्टे मन्त्री ननर्त । पपाठ च आनन्दाश्रुनिर्झरिताक्ष —

कल्पद्रुमतरुरसौ तरवस्तथाऽन्ये
चिन्तामणिर्मणिरसौ मणयस्तथाऽन्ये ।
धिग् जातिमेव ददृशे बत यत्र नेमि
५ श्री'रैवते स दिवसो दिवसास्तथाऽन्ये ॥१॥[1]

भमङ्गवैराग्यतरङ्गरङ्गे, चित्ते त्वदाये 'यदु'वशरत्न ! ।
कथ कृशाङ्गयोऽपि हि गा तु हन्त, यस्मादनङ्गोऽपि पद न लेभे ॥२॥[2]

तत्राऽप्यष्टाह्निकादिविधि प्रागिव । नाभेयभवन-कल्याणत्रय गजेन्द्रपदकुण्डा ऽत्तिकप्रासाद-अम्बिका शाम्ब प्रद्युम्नशिखरतोर
१० णादिकीर्तनदर्शनैर्मन्त्री सङ्घस्य नयनयो स्वादुफलमार्पिपताम् (?)। आरात्रिकेऽर्थिना ससम्भ्रम मन्त्रिमध्ये झम्पापन दृष्ट्वा श्रीसोमेश्वर कवि [3]कवित्व चकार—

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमे स्थीयते
पाताले पवमानभोजनजने कष्ट प्रनष्टो बलि ।
१५ नीरागानगमन् मुनीन् सुरभयाश्चिन्तामणि क्वाप्यगात्
तस्मादर्थिकदर्थना विपहतां श्रीवस्तुपालः क्षितौ [4] ॥१॥[5]

[6]लक्ष सपादोऽस्य दत्तो मन्त्रिण । दानमण्डपिकायां निषण्णो निरर्गल ददत् एव स्तुत केनापि धनिना—

पीयूषादपि पेशला शशधरज्योत्स्नाकलापादपि
२० स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभा ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जला
येषां न प्रथयन्ति चेतसि मुद श्रीवस्तुपालोक्तय [7] ॥१॥[8]

वस्तुपाल ! तव पर्वशर्वरी-गर्विनि द्युवरराजिस्वर यश ।
क्षीरनीरनिधिवाससः क्षिते-रुत्तरीयपटुतां विगाहते ॥२॥

---

१ B C । २ प-'पूर्णे । ३ उपजाति । ४ प P 'द्धाधिक'? । ५ ग-भाव' । ६ शार्दूल० । ७ P प-'प्रलाप० । ८ शार्दूल० । ९ रथोद्धता ।

एवं भावं सम्पूर्य देवोत्तमं श्रीनेमिमापृच्छ्य सर्वास्तीर्थचिन्ताः कृताः।
निर्माल्यपदं दत्त्वा पर्वतादुदतारीत्, न सतां हृदयात्, नापि
महत्त्वात्। अथ खङ्गारदुर्गाद्रि-देवपत्तनादिषु देवान् ववन्दे।
तेजःपालं 'खङ्गारदुर्गे' स्थापयित्वा स्वयं ससङ्घो वस्तुपालः
श्री'धवलकके' श्रीवीरधवलमगमत्। स्वागतप्रश्नः स्वामिना ५
कृतः। आरम्भसिद्धिप्रश्नश्च। ततो मन्त्र्याह—

> कामं स्वामिप्रसादेन, प्रेष्याः कर्मसु कर्मठाः।
> तद् वैभवं वृहद्भानोः, काचिदूष्मा जलेऽपि यत्॥१॥[1]

राणकेन संसद्धः सचिवः स्वसदने भोजितः परिधापितः
स्तुतश्च। तेजःपालस्तु 'खङ्गारदुर्ग'स्थो भूमिं विलोक्य १०
'तेजलपुर'ममण्डयत्, सत्रा-ऽऽराम-पुर-प्रपा-जिनगृहादिरम्यम्।
प्राकारश्च 'तेजलपुरं' परितः कारितः। पाषाणबद्धस्तुङ्गः।

अथ वस्तुपालः श्रीवीरधवलपार्श्वे सेवां विधत्ते। देशः
सुस्थः। धर्मो वर्तते। एवं सत्येकदा 'ढिल्ली'नगरादेत्य चरपुरुषैः
श्रीवस्तुपालो विज्ञप्तः— देव! 'ढिल्ली'तः श्रीमोजदीन- १५
सुरत्राणस्य सैन्यं पश्चिमां दिशमुद्दिश्य चलितम्। चत्वारि
प्रयाणानि व्यूढम्, तस्मात् सावधानैः स्थेयम्। मन्ये 'अर्बुद'-
मध्ये भूत्वा 'गूर्जर'धरां प्रवेष्टा। मन्त्रिणा सत्कृत्य ते चरा
राणपार्श्वे नीताः। कथापितः स प्रबन्धः। ततो राणकेनाभाणि—
वस्तुपाल! म्लेच्छैर्गर्दभिल्लो 'गर्दभी'विद्यासिद्धोऽप्यभिभूतः। २०
नित्यं सूर्यबिम्बनिर्यत्तुरङ्गमकनराजपाटीकः शिलादित्योऽपि
पीडितः। सप्तशतयोजनभूनाथो जयन्तचन्द्रोऽपि क्षयं नीतः।
विंशतिवारबद्धसहाबदीनसुरत्राणमोक्ता पृथ्वीराजोऽपि बद्धः।
तस्माद् दुर्जया अमी। किं कर्ताऽसि? वस्तुपाल उवाच—
स्वामिन्! प्रेषय मां यदुचितं तत् करिष्यामि। ततः साराध- २५

---

१ ग-'सर्वासां तीर्थचिन्ता कृता'। २ भोः। ३ नयुत्। ४ ग-'पालोऽपि'।
५ क-ख-घ-'अर्बुददिशा गूर्जर०'।

लक्षेण सह चलितो मन्त्री । तृतीयप्रयाणे महणलदेवीं कर्पूरादि
महापूजापूर्वं सस्मार । सा तद्भाग्यात् प्रत्यक्षीभूयोवाच–वत्सक !
मा भैषी । 'अर्बुद'दिशा यवना प्रवेक्ष्यन्ति । तव देशं यदाऽ
मी प्रविशन्ति तदैतत्पृष्ठिता घण्टिका. स्वराजन्यै रोधयेथा ।
५ तेऽग्र यत्रावासान् गृह्णन्ति तत्र स्थिरचित्त ससैन्यो युद्धाय
सरभस ढौकेथा । जयश्रीस्तव करपङ्कजे एव । इद श्रुत्वा
धारावर्षाय'ऽर्बुद'गिरिनायकाय स्वसेवकाय नरान् प्रैषयत्
अकथापयच्च— म्लेच्छसैन्य'मर्बुद'मध्ये भूत्वा आजिगमिषदास्ते,
त्वमेतानागच्छतो मुक्त्वा पश्चाद् घण्टिका रुन्ध्या । तेन
१० तथैव कृतम् । प्रविष्टा यवना । यावदावासान् ग्रहीष्यन्ति
तावद् पतितो वस्तुपालः काल । हन्यन्ते यवना । प्रस्खलितो
धुम्मारव । केचिद् दन्तान्तर(रे) अङ्गुलीं गृह्णन्ति । अपरे तोबा
कुर्वन्ति । तथापि न छुटन्ति । एव तान् हत्वा तच्छीर्षलक्षे
शकटानि भृत्वा 'धवलक'भेत्य मन्त्री स्वस्वामिन प्रत्यदर्शयत् ।
१५ श्लाघितश्च तेनायम्—

न ध्यान तनुषे न यासि विकट नोच्चैर्महस्यानन
दर्पानो ऽप्यासि क्षिति खरपुटैर्नाविज्ञया वीक्ष्यसे ।
किन्तु त्व वसुधातले धवलकस्कन्धाधिरूढे भरे
तीर्थ्यांपुच्छतटीनिविष्टविषमाण्युड्डयन् लक्ष्यसे ॥१॥

२० तत परिधापित । विसृष्ट स्वगृहाय । तत्र मङ्गलकरणाय लावा-
गम । द्रम्मेण पुष्प लभ्यते । एव पुष्पसद्व्ययो लोकै कृत ।
इतश्च 'नागपुर' साधुदेल्हासुत सा०पूनडः श्रीमोजदीन
सुरत्राणपत्नीबीबीप्रतिपन्नभ्राता अश्वपति-गजपति-नरपतिभि यो
विजयते । तत्र प्रथम 'शत्रुञ्जये' यात्रा विसप्तत्यधिकद्वादशशत-

१ घ- महणपदवी । २ ग [illegible] । ३ ग-घ- [illegible] । ४ घ-
[illegible] । ५ ग-घ- [illegible] । ६ घ- तीर्थ [illegible] । ७ [illegible] ।
८ [illegible] । ९ ग- [illegible] ।

'वर्षे विक्रमात् १२७३ वर्षे 'धवल्क'पुरात् कृता। द्वितीया सुरत्राणादेशात् षडशीत्यधिके द्वादशशतसङ्ख्ये १२८६ वर्षे 'नागपुरा'त् कर्तुमारब्धा। तत्सङ्घेऽष्टादश शतानि शकटानि। बहवो 'महाधरा। 'कुमारः तेन सहितो 'माण्डव्य'पुरं यावदायात। ततः सङ्घसम्मुखमागत्य 'तेजःपालेन 'धवलक्क'मानीतः। श्री-  ५
वस्तुपालः सम्मुखमागात्। सङ्घस्य धूली पवनानुकूल्याद् यां यां दिशमनुधावति तत्र तत्र स गच्छति। तटस्थनरैर्भणितम्—मन्त्रीश! इतो रजः। इतः पादोऽवधार्यताम्। ततः सचिवेन रमणे—इदं रजः स्प्रष्टुं पुण्यैर्लभ्यते। अनेन रजसा स्पृष्टेन पापरजांसि दूरे नश्यन्ति। यतः—  १०

श्रीतीर्थपान्थरजसा विरजा भवन्ति
तीर्थेषु बम्भ्रमणतो न भवे भ्रमन्ति।
द्रव्यव्ययादिह नराः स्थिरसम्पदः स्युः
पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ १ ॥'

ततः सङ्घपतिपूनड-मन्त्रिणोर्गाढालिङ्गन-प्रियालापौ सम्वृत्तौ। सर-  १५
स्तीरे स्थितः सङ्घः। पूनडः कुल्गुरुमलधारिश्रीनरचन्द्रसूरि-पादान् ववन्दे। रात्रौ श्रीवस्तुपालेन ज्ञापितं पूनडाय पुण्या-त्मने—प्रातः सर्वमहत्तमाभ्यागतस्त्नियिना युष्मना च मत्प्रत्नम्, घूमो न रावः। पूनडेन तथेति प्रतिपन्नम्। रात्रौ मण्डपो द्विद्वारो रमवर्ती प्रकारः। तेन निष्पन्नम्। आगच्छन्ति नागपुरात्। सर्वेषां चरणक्षालनं वस्त्रार्पणं च श्रीवस्तुपालः स्वहस्तेन करोति। एवं क्षमा द्विप्रहरी। मन्त्री तु तथैव निर्विण्णः। तदा तेजः-

पालेन विज्ञप्तम्—अन्यैरपि देव ! वयं सद्वपदक्षालनादि करिष्यामः, यूयं भुङ्ग्ध्वम् , तापो मा भूत् । मन्त्री भणति— मैवं वादीः । पुण्यैरयमवसरो लभ्यते । गुरुभिरपि कथापितम्—

यस्मिन् कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः ।
५ तस्मिन् विनष्टे हि कुलं विनष्टं, न नाभिभङ्गे त्वरका वदन्ति ॥१॥

तस्माद् भोक्तव्यं भवद्भिः । तापो मा भूत् । मन्त्रिणा गुरून् प्रति पुनरिदं काव्यं प्रहितम्—

अद्य मे फलवती पितुराशा, मातुराशिषि शिखाङ्कुरिताऽद्य ।
यद् युगादिजिनयात्रिकलोक, पूजयाम्यहमशेषमखिन्नः ॥२॥

१० भोजयता मन्त्रिणा नागपुरीयाणामेकपङ्क्तिं दृष्ट्वा शिरो धूनितम् । अहो शुद्धा लोका एते ! । एवं भोजयित्वा परिधाप्य च रञ्जितो 'नागपुर'सङ्घः । गतौ वस्तुपाल-पुनडौ श्री'शत्रुञ्जयं' ससङ्घौ । वन्दितः श्रीऋषभः । एकदा स्नात्रे सति देवार्चको देवस्य नासां विधत्ते पुष्पैः किल कलसेन नासां मा पीडीदित्या-
१५ शयतः । तदा मन्त्रिणा चिन्तितम्—कदाचिद् दैवाद् देवाधिदेवस्य कलसादिना परचक्रेण वाऽवक्तव्यमङ्गलं भवेत् तदा का गतिः सङ्घस्य इति चिन्तयित्वा पूनड आलेपे—भ्रातः ! सङ्कल्पोऽयमेवं मे संवृत्त— यदि बिम्बान्तरमेतन्मम्माणीयं क्रियते तदा सुन्दरतरम् । तत् तु सुरत्राणमोजदीनमित्रे त्वयि यतमाने स्यान्नान्यथा ।
२० पूनडेनोक्तम्— 'तत्र गतैश्चिन्तयिष्यतेऽदः' । इत्यादि वदन्तौ 'रैवता'दितीर्थान् वन्दित्वा व्यावृत्तौ तौ । गतः पूनडो 'नागपुर'म् । मन्त्री धवलक्के राज्यं शास्ति ।

एवं गियनेऽब्देषु सुरत्राणमोजदीनमाता वृद्धा हजयात्रार्थिनी

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible] ५ [illegible] ६ [illegible] ७ [illegible] ८ [illegible] ९ [illegible] १० [illegible]

'स्तम्भपुर'मागता । नौवित्तगृहेऽतिथित्वेनास्थात् । सा समागता सचिवेन चरेभ्यो ज्ञाता । चराः प्रोक्ता श्रीमन्त्रिणा– रे यदा इयं जलपथेन याति तदा मे ज्ञाप्या । गच्छन्ती ज्ञापिता तैः । मन्त्रिणा निजकोलिकान् प्रेष्य तस्याः सर्वं कोटीम्बकस्य वस्तु ग्राहितम् । मुष्टं रक्षपितं च कश्चित् । तदा नाविकैः पूत्कृतम्— ५
मन्त्रि– देव ! जरत्येकाऽस्मद्यूथ्या हज्जयात्राय गच्छन्ती त्वत्पदे तस्करैर्लुण्ठिता । मन्त्रिणा पृष्टम्— का सा जरती[1] । तैरुक्तम्— देव ! किं पृच्छसि ? । सा मोजदीनसुरत्राणमाता पूज्या । मन्त्रिणा भणितं मायया—अरे वस्तु निरीक्षयन् विलम्बयन । दिनद्वय विलम्ब्यानीतोऽर्पितं सर्वम् । जरती तु स्वगृहे आनिन्ये । विविधा भक्तिः १०
क्रियते । पृष्टा च किं हज्जयात्रेच्छा वः[2] । तयोक्तम्— ओमिति । तर्हि दिनकतिपयान् प्रतीक्षध्वम् । प्रतीक्षाञ्चक्रे सा । तावताऽऽरासणाऽऽश्मीयं तोरणं घटापितम् । आनायितं च । मेलयित्वा विलोकितं च । पुनर्विघटितम् । सूत्रेण बद्धम् । सूत्रधाराः सह प्रगुणिताः । मन्त्रिणश्च मार्गश्चान्तरे त्रिविधोऽस्ति—एको जलमार्गः, १५
अपरः करभगम्यः, इतरस्तु अश्वलङ्घ्यः । यत्र ये राजानोऽपोव्या(?) यथोल्लङ्घ्यन्ते तथा मूत्र कृतम् । राज्ञा उपदार्थे द्रव्याणि प्रगुणीकृतानि । एवं सामग्र्या सा प्रहिता तत्र । रचितं तोरणं 'ममीति'[3]-द्वारे । तत्र दीपतैलादिपूजाचिन्ता तद्राजपार्श्वाद् शाश्वती कारिता । दत्तं भूरि भूरि तत्र । उदभूद् भूरि यशः । व्यावृत्ता जरती । २०
आनीता 'स्तम्भपुर'म् । प्रवेशमहः कारितः । स्वयं तदङ्घ्रिक्षालनं चक्रे । एवं भक्त्या दिनदशकं स्थापिता स्वगृहे । तावता धवलकिशोरशतपञ्चकं अन्यदपि दुकूलगन्धराजकर्पूरादि गृहीतम् । वृद्धा प्रोक्ता–मातः क्वासि[4] ? । यथादिशसि तत्र मानं च दापयामि तदाऽहमप्यागच्छामि । तया भणितम्— तत्राहमेव प्रभुः । स्वैरमेहि । पूजा २५

[1] ख–'काठीमकम्य'। [2] 'स्वयं सह भूत्वा' इत्यधिको ग-पाठः। [3] घ-'मदीति'। [4] 'मसीद' इति भवस्यन् । [5] घ–'दास्यसि'।

ते तत्र बहुतरी। श्रीवीरधवलानुमत्या चलितो मन्त्रिमहेन्द्रः[1]। गतो 'दिल्ली'तटं, राजमातृवचनात्। कोशद्वयेऽर्वाग् तस्थौ। सुरत्राण सम्मुखमागान्मातुः। माता प्रणता पृष्टा च सुखयात्राम्। जरत्या प्रोक्तम्—कथं न मे भद्रं यस्या 'दिल्लया' त्वं पुत्रः, 'गूर्जर'धरायां तु वस्तुपालः[2]। राज्ञा पृष्टम्—कोऽसौ। जरत्या वृत्तान्तः प्रोक्तः तद्वि-नयख्यातिगर्भः। राजाऽऽह—स किमिति नानीतः[3]। वृद्धाऽऽह—आनीतोऽस्ति। [4]दर्शय तर्हि। अश्ववारान् प्रहित्य आनाय्य दर्शितो वस्तुपालः। दत्तोपदा मन्त्रिणा। आभाषितश्च राज्ञा—मात्रा मदधिकस्त्वं पुत्रो मतः, तेन मम बान्धवस्त्वम्। अस्मन्मातरं त्वां स्तौति। एवं सुखवार्तां कृत्वा महतोत्सवेन स्वमातुरग्रेसरं कृत्वा श्रीवस्तुपालो 'दिल्ली'पुरं नीतः आवासितश्च साधु-पूनडस्यावासे। स्वमुखेन सुरत्राणेन निमन्त्र्य साधुपूनड-सदने भोजयित्वा निजधवलगृहे आकारितः सचिवेन्द्रः। सविनयं सत्कृत्य परिधापितः। सुवर्णकोटिभिश्च प्रसादपदे दत्ता उक्तश्चेति किञ्चिद् याचस्व। वस्तुपालेनाभिहितम्—देव! 'गूर्जर'धरया सह देवस्य यावज्जीवं सन्धिः स्यात्। उपलपञ्चकं 'मम्माणी'खनीतो दापय। राज्ञा मतं तत्। दत्ता धीराः। तत्फलहीपञ्चकं नृपादेशात् पूनडेन प्रेषितं[5] 'शत्रुञ्जया'दौ[6]। तत्रैका ऋषभफलही, द्वितीया पुण्डरीकफलही, तृतीया कपर्दिनः, चतुर्थी चक्रेश्वर्याः, पञ्चमी 'नेजलपुरे' श्रीपार्श्व-फलही। चलितः पश्चान्मन्त्रीश्वरः स्वपुरं गतः। प्रणतः स्वस्वामी। तेन चिरदर्शनोत्कण्ठाविह्वलेन। पूर्वमपि वर्णाकर्णितया श्रुतं 'दिल्ली'गमनवृत्तान्तम्। पुनः सविशेषं मन्त्रिणं पप्रच्छ। सोऽपि निरवशेषमगर्वेण प्रैघर्या[7]। तुष्टो वीरधवलः। दत्ता दत्त-

---

१ ख-इदेन। २ ख-दर्शनं। ३ प-'नात'। ४ 'एवं० कृत्वा' इति पाठो ख-प्रतौ न वर्तते। ५ प-'तु पूनडेन प्रैषि'। ६ ग-'शत्रुञ्जयाद्यौ'। ७ ग-ख-'मायच्छर्यं'।

लक्षी हेम्नां प्रसादपदे मा तु गृहादर्वागेव दत्ता बहुमिलितयाच-केभ्यः । मिलितो मन्त्रिगृहे सर्वोऽपि लोकः । स सत्कृत्य प्रेषितः । कवयस्तु पठन्ति—

म्लायन्ति दृष्ट्वा द्विजराजमेकं, पद्मानि सङ्कोचमहो भजन्ति ।
समागतेऽपि द्विजराजलक्षे, सदा विकासी तव पाणिपद्मः ॥१॥[1] ५

उच्चाटने विद्विषतां रणाग्रे–माकर्षणे स्वामिहृदश्च वश्ये ।
एकोऽपि मन्त्रीश्वर ! वस्तुपाल !, सिद्धस्तव स्फूर्तिमियर्ति मन्त्रः ॥२॥[2]

एवं स्तूयमान उन्नतत्वाल्लज्जमानो वस्तुपालोऽधो विलोकयामास ।
ततो 'महानगर'वासिना नानककविना भणितम्—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं १०
लज्जानम्रशिराः स्थिरातलमिदं यद् वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलक ! श्रीवस्तुपाल ! ध्रुवं
पातालाद् बलिमुद्दिधीर्षुरसकृन्मार्गं भवान् मार्गति ॥३॥[3]

तदैव 'कृष्णा'नगरीयकविकमलादित्येन भङ्ग्यन्तरमुक्तम्—

लक्ष्मी चलां त्यागकलां चकार यां १५
साऽर्थिश्रिता कीर्तिमसूत नन्दिनीम् ।
साऽपीच्छया क्रीडति विष्टपाङ्गन-
स्तद्वार्त्तयाऽसौ त्रपते यतो महान् ॥४॥[4]

तेषां कवीनां भूरि दानं दत्तम् ।

अथ कदाचन मन्त्रिणा श्रुतम्, यथा–'रैवतका'त्तले गच्छतां २० लोकानां पार्श्वतो मरटकाः पूर्वनरेन्द्रदत्तं करमुद्ग्राहयन्ति । पोट्टलिकेभ्यः कणनाणकमेकं १ कूपकात् कर्ष एकः, एवं उपद्रूयते लोकः । तत आयतिदर्शिना सचिवेन ते मरटकाः 'कुहाडी' नामा-नं ग्रामं दत्त्वा करमुद्ग्राहयन्तो निषिद्धाः । 'अङ्केवालिया'ग्रामस्तु ऋषभनेमियात्रिकाणां क्षीणधनानां स्वगृहातियोग्यपाथेय- २५

१ ख घ-'प्रकृदेन' । २ उपजातिः । ३ इन्द्रवज्रा । ४ पूर्वतन्त्र् । ५ शार्दूल० । ६ घ-'नन्दनीम्' । ७ ख-'सा पीडया' । ८ इन्द्रवंशा ।

द्रम्मपदे[1] दत्त । 'शत्रुञ्जय'-'रैवतक'तलहट्टिकानगरयो[2] सुखासनानि कृत्वा मुक्तानि अन्धज्वरितादीनां यात्रिकाणा तीर्थारोहणार्थम् । तैदुत्पाटकनराणा[3] तु ग्रासपदे शाल्क्षेत्राणि प्रतिष्ठितानि । तीर्थेषु सर्वेषु देवेभ्यो रत्नखचितानि हैमभूषणानि कारितानि । विदे-
५ शायातसूरिशुश्रूषार्थं सर्वदेशग्रामण्यो नियुक्ता । कृत लौकिकतीर्थ करणमपि रैशस्वामिरञ्जनार्थम्[4], न भक्त्या स्वय तु सम्यग्दृष्टित्वात् । एव तस्योपकारा कियन्त्युच्यन्ते विवेकशिरोमणेः ? ।

एकदा 'स्तंभ'पुर[5] गतो मन्त्री 'धवलका'त् । तत्र समुद्रतीरे यानपात्रात् तुरङ्गा उत्तरन्त सन्ति । तदा **सोमेश्वरः** कवीन्द्र
१० आसन्नवर्ती । मन्त्रिणा समस्या पृष्टा—

प्रावृट्काले पयोराशि-रासीद् गर्जितवर्जित[6] ।

**सोमेश्वरः** पूरयति स्म—

अन्त सुप्तजगन्नाथ-निद्राभङ्गभयादिव ॥१॥[7]

तुरङ्गमषोडशकमुचितदानेऽत्र दत्तम् । पुन कदाचिन्मन्त्रि-
१५ णोक्तम्—काक किं वा क्रमेलक ? । सोमेश्वरेण पूरित पद्यम्—

येनागच्छन्ममाख्यातो, येनानीतश्च मत्पति ।

प्रथम सखि ! क पूज्य , काक. किं वा क्रमेलक ? ॥२॥[8]

अत्रापि षोडशसहस्रा द्रम्माणां दत्ति ।

एष लीला तस्य ।

२० एकदा वृद्धेभ्य श्रुतमेवंविधम्, यथा—

'प्राग्वाट'वंशे श्रीविमलोदण्डनायकोऽभवत् । नेढ-वाहिलयो-र्भ्राताऽभवत् । स चिर'मर्बुदा'धिपत्यमभुनक्, गूर्जरेश्वरप्रसत्ते । तस्य विमलस्य विमलमतेर्वाञ्छाद्वयमभूत्—पुत्रवाञ्छा, प्रासाद-वाञ्छा च । तत्सिद्ध्यै[9] स्वगोत्रदेव्यां अम्बिकामुपवासत्रयेणाराध ।
२५ प्रत्यक्षीभूय सा प्राह—वत्स ! वाञ्छां ब्रूहि । विमलो जगौ—पुत्रेच्छा

---

१ घ-'धर्म्मपदे' । २ क-घ-'रैवतोपत्यकानगरया' । ३ घ-'तदुग्य(?)नरा॰' ।
४ ख-'हरय स्वामि॰' । ५ ग-'स्तम्भतीर्थपुर' । ६ ग- राशिः करमाद् गर्जित॰' ।
७-८ अनुष्टुप् । ९ ख-'तत्सिद्ध्यैर्म्बाउप॰' ।

प्रासादनिष्पत्तीच्छा चा'ऽर्बुद'शृङ्गे मे वर्तते । अम्बया प्रोक्तम्— द्वे प्राप्ती न स्तः । एकां ब्रूहि । ततो विमलेन संसारवृद्धिमात्रफलामसारां पुत्रेच्छां मुक्त्वा प्रासादेच्छैव सफलीकर्तुमिष्टा । अम्बयोक्तम्— सेत्स्यति तवेयम्, परं क्षणं प्रतीक्षस्व यावताऽहं गिरिवरा'ऽर्बुदा'-धिष्ठात्र्याः सख्याः श्रीमातुर्मतं गृह्णामि । इत्युक्त्वा गता देवी । तावद् विमलो ध्यानेन तस्थौ । श्रीमातृमतं ज्ञात्वा देव्यायाता अभाणीच—	५

> पुष्पस्रग्दामरुचिरं, दृष्ट्वा गोमयगोमुखम् ।
> प्रासादार्हं भुवं [1]विद्याः, [2]श्रीमातुर्भवनान्तिके ॥१॥[3]

तत् तथैव दृष्ट्वा चम्पकद्रुमसन्निधौ तीर्थमस्थापयत् । पैत्तल-प्रतिमा तत्र महती विक्रमादित्यात् सहस्रोपरि वर्षाणामष्टाशीतौ गतायां चतुर्भिः सूरिभिरादिनाथं प्रत्यतिष्ठिपत् । 'विमलवसतिः' इति प्रासादस्य नाम दत्तम् । तस्मिन् दृष्टे [4]जन्मफलं लभ्यते ।	१०

एतत्कथाश्रवणान्मन्त्री दध्यौ—वय चत्वारो भ्रातरोऽभूम । तन्मध्ये द्वौ स्तः । द्वौ तु मालदेव-लूणिगाबल्पवयसौ दिवमगाताम् । मालदेवनाम्ना कीर्तनानि प्रागपि अकारियत । नित्यन्त्यपि लूणिग-श्रेयसे तु 'लूणिगवसति'र्'र्बुदे' कारय्या । एतद् तेजःपालाय प्रकाशितम् । तेन विनीतेन सुतरां मेने । अथ तेजःपालो 'धवल-कक्का'द'र्बुद'गिरिभूषणं 'चन्द्रावतीं' पुरीं गत्वा धारावर्षराणक-गृहमगात् । तेनात्यर्थं पूजितः । किं कार्यं आदिश्यतामित्युक्तं च । मन्त्रिणोक्तम्—'अर्बुद'शिखराग्रे प्रासादं कारयामहे यदि यूयं साहाय्या स्यात । धारावर्षेण भणितम्—तव सेवकोऽस्मि । अहं सर्वकार्येषु धुरि योग्यः । ततो राष्ट्रिकैर्गौगलिकादयो महादानै-र्वशीकृतास्तथा, यथा [6]निष्पत्स्यमानं चैत्यं करैर्न भारयन्ति, 'दानेन भूतानि वशीभवन्ति' इति वचनात् । ततः'चन्द्रावती'महा-	१५ २०

१ 'मातश्रीदेव्या वचसा' इत्यधिकं ग-पाठे । २ ग-'विपाः'। ३ अनुष्टुप् । ४ ग-'जन्म सफलं लभ्यते' । ५ घ-'गौगलिक०' । ६ ग-'निष्पद्यमानचैत्योपरि चैत्यं न भजन्ते दानेन' ।

जनमुख्य श्रावकं चाम्पलनामानं गृहे गत्वाऽऽलळाप । वयं चैत्यं 'मर्वुदे' कारयामहे यदि पूजासान्निध्यं कुरुषे । चाम्पलेनापि स्वस्य कुटुम्बान्तराणामपि देवपूजार्थं नित्यधनचिन्ता कृता । ततो मन्त्री 'आरासण' गत्वा चैत्यनिष्पत्तियोग्यं दलपाटकं 'निरका-

५ शयत् । तद्युग्यैरहकलै(?)श्चार्बुदोपत्यकमानीनयत् । अर्धक्रोशार्ध-क्रोशान्तरे हट्टानि मण्डापितानि । तत्र सर्वं लभ्यते, पशूनां नराणां क्षुधादि कृच्छ्रं मा भूदिति । 'उम्बरिणी'पथेन प्रासाद-निष्पत्तियोग्यं दलं द्विगुणमुपरि गिरे प्रवेशयामास । पुनस्तां पथां विषमां चकार यथा परचक्रप्रवेशो नो भवेत् । एवं सिद्धे पूर्वकर्मणि

१० शोभनदेवं सूत्रधारमाहूय कर्मस्थाये न्ययुङ्क्त । ऊदलाख्यं शैलं उपरिस्थायिनमकरोत् । अर्थव्यये स्वैरिता च समादिशत् । एवं सूत्रं कृत्वा तेजःपालो 'धवलक्क'मागमत् । निष्पद्यते प्रासादः । श्रीनेमिबिम्बं कषोपलमयं सज्जीकृतं विद्यते । सूत्रधाराणां सप्तशती घटयति घाटम् । ते तु दुःशीला पुरः पुरोऽर्थं गृह्णन्ति । कार्यकाले

१५ पुनः पुनर्याचन्ते । ततः ऊदलो मन्त्रितेजःपालाय लिखति–देव ! द्रम्मा विनश्यन्ति । सूत्रधाराः कर्मस्थायात् प्रथमं प्रथमं गृह्णन्ति । ततस्तेजःपालेन कथापितम्–द्रम्मा विनष्टा इति किं ब्रूपे[1] । विनष्टाः किं क्षुधिताः[2] । न तावत् क्षुधिताः, किन्तु मनुष्याणामुपकृताः । उपकृताश्चेद् विनष्टाः कथं कथ्यन्ते[3] । माता मे वन्ध्येति वाक्यवत्

२० परस्परं विरुद्धं ब्रूपे । तस्मात् तत्त्वमिदम्– सूत्रधाराणामिच्छाच्छेदो न कार्यः, देयमेवेति । ततो दत्ते ऊदलः । तावन्निष्पन्नं यावद् गर्भगृहं मध्ये श्रीनेमिनाथबिम्बं स्थापितम् । एतच्च कृतं श्रीतेजः-पालाय विज्ञप्तम् । तुष्टौ द्वौ मन्त्रिणौ । श्रीवस्तुपालादेशाद् तेजःपालोऽनुपमया सहानल्पपरिच्छदो'ऽर्बुद'गिरिं प्राप्तः । प्रासादं

२५ निष्पन्नप्रायं ददर्श तुतोष (च) । स्नात्वा सद्वस्त्रप्रावरणः सपत्नीको

---

१ ग 'निरवद्यानयनि' । २ ग- उवरणी०', घ- उम्बरणी० । ३ ग-'भाग-क्रालक' ।

मन्त्री **नेमिं** पूजयति स्म । अथ कायोत्सर्गे ध्यानेनोर्ध्वस्तस्थौ
चिरम् । क्षणार्धेनाऽ**नुपमा** पतिं तथास्थं मुक्त्वा प्रासादनिष्पत्ति-
कुतूहलेन बहिरागात् । तत्र सूत्रधारः **शोभनदेवो** मण्डपचतु-
स्तम्भीं ऊर्ध्वयितुं उपक्रमते । तदा मन्त्रिण्या उक्तम्—
सूत्रधार ! मम पश्यन्त्याश्चिरं बभूव । अद्यापि स्तम्भा नोत्तम्भ्यन्ते । ५
**शोभनदेवेनोक्तम्**— स्वामिनि ! गिरिपरिसरोऽयम्, शीत
स्फीतम्, प्रातर्घटनं विषमम् । मध्याह्नदेशे तु गृहाय गम्यते ।
स्नायते, पच्यते, भुज्यते । एवं विलम्बः स्यात् । अथ
विलम्बात् किं भयम् ?, श्रीमन्त्रिपादाश्चिरं राज्यमुपभुञ्जाना
सन्त्वाह तावत् । ततोऽनुपमया जगदे— सूत्रधार ! चाटुमात्र- १०
मेतत् । कोऽपि क्षणं कीदृक् भवेत् को वेत्ति ?। सूत्रधारो मौनं
कृत्वा स्थितः । पत्नीवचनमाकर्ण्य सचिवेन्द्रो बहिर्निःसृत्य
सूत्रधारमवोचत्— अनुपमा किं वावदीति ?। सूत्रधारो
व्यजिज्ञपत्— यद् देवेन अवधारितम् । मन्त्री दयितामाह—
किं त्वयोक्तम् ?। अनुपमाऽऽह— देव ! वदन्त्यस्मि—कालस्य १५
को विश्वासः ?। काऽपि कालवेला कीदृशी भवति ?। न सर्वदा
ऽपि पुरुषाणां तेजस्तथा । यथा—

> श्रियोर्वा स्वस्य वा नाशो, येनावश्यं विनश्यति ।
> श्रीसम्बन्धे बुधाः स्थर्य-बुद्धिं बध्नन्ति तत्र किम् ? ॥१॥[1]
> वृद्धानाराधयन्तोऽपि, तपस्यन्तोऽपि दुर्बलान् । २०
> पश्यन्तोऽपि गतश्रीकान्, अहो मुह्यन्ति जन्तवः ॥ २ ॥[2]
> भूपभ्रूपल्लवप्रान्ते, निरालम्बाऽविलम्बनात् ।
> रैपेयसीं जनं मन्यन्ते, सेवका स्वामपि श्रियम् ॥३ ॥[3]
> इति विपदितो मृत्यु-रितो व्याधिरितो नराः ।
> जन्तवो हन्त पात्यन्ते, चतुर्भिरपि सन्ततम् ॥४॥[4] २५

---

१ ख-'धानेनोर्ध्वस्तस्थौ' । २-३ अनुष्टुप् । ४ ग-'स्वामवश्यमपि' इत्यर्थ, मन्यन्ते मन्त्रिणो बुधाः । ५-६ अनुष्टुप् ।

एतत् तत्त्ववच श्रुत्वा मन्त्रिवर प्राह—अयि कमलदलदीर्घलोचने ! त्वा विना कोऽन्य एव वक्तु जानाति [१] ।

'ताम्रपर्णी'तटोत्पन्नै—मौक्तिकैरिक्षुकुक्षिजै

र्नेदस्पर्धभरा वर्णा , प्रसन्ना स्वादवस्तव ॥५॥[२]

५ गृहचिन्ताभरहरण, मतिवितरणमखिलपात्रसत्करणम् ।

किं किं न फलति कृतिना गृहिणी गृहकल्पवल्लीव [३] ॥६॥[४]

राज्यस्वामिनि ! वद केनोपायेन शीघ्र प्रासादा निष्पद्यन्ते [५] । देव्याह—नाथ ! रात्रीयसूत्रधारा पृथक् दिनीयसूत्रधारा पृथग् व्यवस्थाप्यन्ते । कटाहिश्चटाप्यते । अमृतानि भोज्यन्ते । सूत्र-

१० धाराणा च विश्रामलाभाद् रोगो न प्रभवति । एव चैत्यसिद्धि शीघ्रा । आयुर्लोत्येव, श्रीरस्थिरैव । यत —

गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् ।

अजरामरवत् प्राज्ञो, विद्यामर्थं च चिन्तयेत् ॥१॥[४]

इत्यादि सरस्वतीवीणाक्वणितकोमलया गिरोक्त्वा निवृत्ता

१५ सुलक्षणा सा । मन्त्रिणा सर्वदेशकर्मस्थानेषु सैव रीति प्रारब्धा । निष्पन्न च सर्वं स्तोकैरेव दिनै । गतो मन्त्री 'धवलक्क'म् । दिनै कतिपयैर्मर्धापनिकानर आयात—देव ! 'अर्बुदा'द्रौ नेमिचैत्य निष्पन्नम् । हृष्टौ द्वौ बान्धवौ । पुन प्रासादप्रतिष्ठार्थं गतौ ससङ्घौ तत्र । तत्र च 'जाबालि'पुरात् श्रीयशोवीरो नाम भाण्डागारिक

२० सरस्वतीकण्ठाभरणत्वेन ख्यात स आहूत आगात् । मिलिता वस्तुपाल-तेजःपाल यशोवीरा एकत्र न्याय विक्रम विनया इव साक्षात् । चतुरशीती राणा । द्वादश मण्डलीका । चत्वारो महीधरा । चतुरशीतिर्मुद्रानना । एव सभा । तदा वस्तुपालेन यशोवीरः प्रोचे— भाण्डागारिक ! त्व नृपउदयसिंहस्य मन्त्री यौगन्धरायण

२५ इव वत्सराजस्य । तत्र स्तुता स्वस्थानस्था शृणुम , यथा—

---

१ ग-'कमलदल०' । २ अनुष्टुप् । ३ आर्या । ४ अनुष्टुप् । ५ ग-'जालन्धरपुरात्' ।
६ घ-'कण्ठभूषणत्वेन' ।

विन्दवः श्रीयशोवीर !, मध्यशून्या निरर्थकाः ।
सङ्ख्यावन्तो विधीयन्ते, त्वयैकेन पुरस्कृता ॥१॥[1]

यशोवीर ! लिखत्याख्यां, यावच्चन्द्रविधिस्तव ।
न माति भुवने तावद्-दायमप्यक्षरद्वयम् ॥२॥[2]

अंत एव मे सदा भवद्दर्शनरणरणकाक्रान्तमेव स्वान्तमासीत् । ५
इदानीं चारुसम्पन्नं भवदीयसाङ्गत्यम्, तदपि विशेषतः श्रीमन्-
नेमिदृष्टौ । ततो यशोवीरो व्याहरति—

श्रीमत्कर्णपरम्परागतभवत्कल्याणकीर्तिश्रुतेः
प्रीतानां भवदीयदर्शनविधावस्माकमुत्कं मनः ।
श्रुत्वा प्रत्ययिनी सदा ऋजुतया स्वालोकविस्रम्भणी १०
दाक्षिण्यैकनिधानकेवलमियं दृष्टिः समुत्कण्ठते ॥१॥[6]

इत्याद्याः सङ्कथाः पप्रथिरे । प्रासादबिम्बप्रतिष्ठोत्सवाः संवृत्ताः ।
श्रीवस्तुपालेन एकदा चैत्यस्य दूषणभूषणानि पृष्टो यशोवीर
प्रोचे–देव ! शोभनदेवः सूत्रधारः शोभनः, ततो युक्तं एतदस्या
कीर्तिस्तम्भोपरिस्थिता एकामङ्गुलीमूर्ध्वीकृत्य वर्तमाना घटिता । १५
स तु कर्मकर एव द्रव्यलोलुपः । अत्र तव मातुर्मूर्तिर्विलोक्यते
येन दाता दुर्लभः ।

शतेषु जायते शूरः, सहस्रेषु च पण्डितः
वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥१॥[9]

इत्यादि किमुच्यते ? । प्रासादः परमनमः । परं दोषा अपि सन्ति । २०
प्रासादापेक्षया सोपानानि ह्रस्वानि १ स्तम्भे बिम्बान्याशातना-
भाजनं स्युः २ द्वारप्रवेशे व्याघ्ररूपाणि पूजाऽल्पत्वाय स्युः
३ जिनपृष्ठे पूर्वजारोपणात् पाश्चात्यानामृद्धिनाशो भविता

१ अनुष्टुप् । २ घ 'यावच्चन्द्रे विधि०' । ३ अनुष्टुप् । ४ ह–'श्रीनेमि०' । ५ ग–'विधौ नास्माकमुत्कं मनः' । ६ शार्दूल० । ७ ग– 'ततोऽसौ नद्युक्त' । ८ ग–पुस्तके 'स तु' एतदारभ्य 'किमुच्यते' इति पाठाधिक्यम् । ९ अनुष्टुप् । १० घ–'प्रेरेरे' । ११ ख–'नाशिनी' ।

४ आकाशे जैनमुनिमूर्तिरोपणात् तत्पर दर्शनपूजाऽल्पत्वाय ५ गृहलीकृष्णा न मङ्गलाय ६ भारपदा द्वादशहस्तप्रलम्बा कालेन स कोऽप्येतद्विधो न भविष्यति य विनाशे ईदृश प्रक्षेपयिष्यति ७ । इत्यादि श्रुत्वा सत्य मत्वा न चुकोप कोऽपि ।
५ भाविनव्यता चाप्रतिकारा निश्चिक्ये । निरिधदानैर्विक्रमादित्य इव प्रकाश्य महिमान विसृज्य स्वस्थाने लोक सपरिजनो 'धवलक' गत्वा प्रभु नत्वा सुख तस्थौ ।

इतश्च श्रीवीरधवलस्य द्वौ पुत्रौ स्त । एको वीरमः, अपरो वीसलः । तत्र वीरमो यौवनस्थ सूरेषु रेखां प्राप्त यो वर्षा
१० कालेऽकस्मादुपरि पतन्त्या विद्युत उद्देशेन कृपाणीमाकृषत् । स एकदा कस्मिंश्चिदेकाद[1] पर्वणि 'धवलकक'मध्ये तरुतलमगमत् । तत्र पर्वण्यसौ रीति —— वैष्णवै सर्वैरष्टोत्तरशत बदराणां वा आमलकानां द्रम्माणां वा मोक्तव्य तरोरध । वीरमेणाऽष्टोत्तर शत द्रम्मा मुक्ता । एकेन तु वणिजा तस्यामेव सभायां स्थितेना-
१५ ष्टोत्तरशत आवूना मुक्तम् । वीरमेण तस्योपरि कृपाणिका कृष्टा । रे अरमत्त किमधिक करोषीति वदन्नसौ वणिज हन्तुमन्वधावत् । वणिग् नष्ट्वा वीरधवलाध्यासितां सभामाविशत् । जात कलकल । ज्ञात पारम्पर्य वीरधवलेन । वणिजि पश्यति वीरम आकार्य हक्कित —— का ते चर्चा यदय त्वदधिक
२० करोति ? । अस्माक न्याय न वेत्सि ? । दूरे भव, पुनर्मद्दृष्टौ नागन्तव्यम् । वणिजो मम अङ्गम् कोश । मयि जीवति सति केनाभिभूयते ? । इत्युक्त्वा त 'वीरमग्रामा'ख्ये आसन्नग्रामेऽतिष्ठिपत् । स तु कोणिककुमारवत् कंसवत् पितरि द्विष्टो जीव मृतमन्योऽस्थात् । वीसलस्तु राणश्रीवीरधवलस्य वल्लभ
२५ श्रीवस्तुपालस्य च ।

---

[1] ग-'एकदा गृहलीकृष्णा' एतदारभ्य 'प्रक्षेपयिष्यति' एतावत् पाठाविषयम् ।
[2] घ-'रेखा' । [3] ग-'तत्र स्थितेनाष्टोत्तरशत द्रम्मा मुक्ता' ।

अत्रान्तरे श्रीवीरधवलोऽचिकित्स्येन व्याधिना जग्रसे । तदा वीरमः स्वसहायैर्बलवान् भूत्वा राज्यार्थं राणकमिलनमिषेण 'धवलक्क'मागात् । तदैव श्रीवस्तुपालेन त दुराशय ज्ञात्वा प्रत्युत्पन्नमतित्वादश्व-गज-देशादिषु परमात्ममानुषै परमो यत्न कृत । वीरमः प्रभवितु न शशाक । 'धवलक्क' एव स्वसौधे विपुले-ऽवतस्थौ । दिनैस्त्रिभिर्वीरधवलो दिव गत । लोक शोकसमुद्रे पतित । बहुभिश्चितारोहण कृतम् । मन्त्री तु सपरिजनः काष्ठानि मक्षपक्षपरायैर्मन्त्रिभिर्निषिद्ध । उक्त च—देव ! त्वयि सति राण पादा. स्वय जीवन्तीव लक्ष्यन्ते । त्वयि तु लोकान्तरिते परिपूर्णा पिशुनानां मनोरथा । गता 'गूर्जर'धरा इति ज्ञेयम् । ततो न मृतो मन्त्री । उत्पापनदिने मन्त्री श्रीवस्तुपालः सभासमक्ष पठति—

आयान्ति यान्ति च परे ऋतव क्रमेण
सञ्जातमेतदृतुयुग्ममगत्वर तु ।
वीरेण वीरधवलेन विना जनानां
वर्षा विलोचनयुगे हृदये निदाघ ॥ १ ॥[1]

अतीव लि मस्य गता सर्वेऽपि स्वस्थानम् । ततश्च मृते वीरधवले तद्राज्यलिप्सुर्वीरमः सनद्ध गृहान्निर्गमिष्यति यावता तावता श्रीवस्तुपालेन वीसलः कुमारो राज्ये विनिवेशित । वीसलदेव इति नाम प्रख्यापितम् । सर्वराज्याङ्गेष्वात्मनरै रक्षा कारिता । स्वय वीसलं गृहीत्वा साराऽश्वखुरपुटक्षुण्णक्षमापीठोच्छलद्रज पुञ्जस्थगितव्योमा राजन्यकक्रूरयरवाल्लुप्तहल्लभल्लकिरणद्विगुणद्योतितरविकिरणो वीरमसम्मुख ययौ । दारुण समरो जज्ञे । वीरमः स्वस्य तेजसोऽनवकाश मन्यमानो नष्ट्वा श्वशुरेण राजकुलेन उदयसिंहेनाधिष्ठित 'जाबालि'पुर प्रत्यचालीत् । मन्त्री तस्याशय दक्षतया ज्ञात्वा षोडशयोजनिकान् नरानुदयसिंहान्तिके प्रैषीत् आदापयत्, यथा-

१ ग-'चिन्तारोपण कृतम्' । २ वसन्त० । ३ ख-'जाबालिपुर ।

—अमुं राजद्विष्टकारकं जामातृसम्बन्धेन यदि स्वान्तिके स्थापयिष्यसि तदा ते न राज्यं, न जीवितव्यं च । हन्याश्चैवैनम् । ततो यदा **वीरमो** 'जावालिपुरो'द्यानं मासस्तदा विश्राम्यन्नङ्गरक्षिकामुत्तारय-न्नुल्लासयमान **उदयसिंह**नियुक्तैर्धनुर्धरैः शरैः शतमितैर्जर्जरश्चालनी-

५ यप्रायकायः कृतः मृतश्च । तस्य शिरो **वीसलदेवाय** प्रहितं **उदयसिंहेन** । ततो जातं निष्कण्टकं **वीसलदेवराज्यम्** । यावन्मात्रं **वीरधवलेन** साधितं तावन्मात्रान्न किमपि न्यूनमासीत्। केवलं लब्धप्रसरेण **वीसलेन** श्री**वस्तुपालो** लघुतया दृष्टः ।

पुरुषः सम्पदामग्र—मारोहति यथा यथा ।

१० गुरूनपि लघुत्वेन, स पश्यति तथा तथा ॥१॥[3]

राज्ञा **नागड**नामा विप्रः प्रधानीकृतः । मन्त्रिणोः पुनर्लघु-श्रीकरणमात्रं दत्तम् । ऐकश्च **समराक**नामा प्रतीहारो राज्ञोऽस्ति । स प्रकृत्या नीचः । पूर्वमन्यायं कुर्वाणो मन्त्रिश्री**वस्तुपालेन** पीडि-तोऽभूत् । स लब्धावकाशः स्वराजं ब्रूते—देव ! अनयोः पार्श्वेऽनन्त

१५ धनमास्ते तद् याच्यताम् । राजाऽपि तावाहूयावादीत्—अर्थो दीय-ताम् । ताभ्यामुक्तम्—अर्थः 'शत्रुञ्जया'दिषु व्ययितस्ताभ्यामस्ति नः पार्श्वे । राज्ञोक्तम्-तर्हि दिव्यं दीयताम् । मन्त्रिभ्यामभिहितम्—य दिव्यं भवद्भ्यो रोचते तदादिश्यताम् । राज्ञा घटसर्पः पुरस्कृतः । **लवणप्रसादो** तदा जीवन्नभूत् । स निषेधयति तदकृत्यम्, न तु

२० तद्वचनं राजा शृणोति, अभिनवदर्पवशात् । तदा **सोमेश्वरेणो**क्तं काव्यमेकं **वीसलं** प्रति—

मासान्मांसलपाटलापरिमलव्यालोलरोलम्बतः
प्राप्य प्रौढिमिमां समीर ! महतीं हन्त त्वया किं कृतम् ! ।

---

१ घ—'स्नातेयेन' । २ ग—'तदनु जात' । ३ अनुष्टुप् । ४ 'बृहन्नगरीय' इत्यधिको ग—पाठः । ५ ग—'अस्मिन् प्रस्तावे एकः समराक॰' । ६ ग—'इत्यन्येन राज्ञाऽपि'।

सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य यत्
पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥१॥[1]

निर्वर्तितं दिव्यं राज्ञा ।

अथ कदाचिद् 'धवलक्कके' मन्त्रिणि वसति सति पौषध-
शाला एका आस्ते । तस्या उपरितनं पुञ्जकं क्षुल्लकोऽधः क्षिपन्ना- ५
सीत् । तस्याज्ञानात् स पुञ्जको वीसलदेवमातुलस्य सिंहनाम्नो
यानाधिरूढस्याधो रथ्यायां गच्छतः शिरसि पतितः । क्रुद्धः सः ।
मध्ये आगत्य क्षुल्लकं दीर्घया तर्जनकेन पृष्ठे दृढमाहत्य रे मां
'जेठुआकं' [2]सिंहनामानं राजमातुलं न जानासीति वदन् स्वगृहं
गतः । तं वृत्तान्तं मध्याह्ने मन्त्रिवस्तुपालं भोजनारम्भे उत्क्षिप्तप्रथम- १०
कवलं आगत्य रुदन्नुद्घाटितपृष्ठोऽभिजिज्ञपत् क्षुल्लकः । मन्त्रिणा-
ऽभुक्तेनैव उत्थाय क्षुल्लकः सन्धार्य प्रस्थापितः, शालायां प्रेषितश्च ।
तदनु स्वयं स्वकीयः परिग्रहो भाषितः—भो क्षत्रियाः ! स कोऽप्यस्ति
युष्माकं मध्ये यो मम मनोदाहमुपशमयति ? । तन्मध्ये एकेन राज-
पुत्रेण भूणपालाख्येनोक्तम्—देव ! ममादेशं देहि; प्राणदानेऽपि १५
तव प्रसादानां नानृणीभवामः । स एकान्ते नीत्वा मन्त्रिणा छन्नं कर्णे
प्रविश्य समादिष्टम्—याहि, 'जेठुआ'वंशस्य राजमातुलस्य सिंहस्य
दक्षिणं पाणिं छित्वा मे ढौकय । स राजपुत्रस्तथेत्युक्त्वा एकाकी
मध्याह्नदेशे सिंहावासद्वारे तस्थौ । तावता राजकुलात् सिंह आगात् ।
राजपुत्रेणाग्रे भूत्वा प्रणिपत्य सिंहाय उक्तम्—मन्त्रिणा श्रीवस्तु- २०
पालदेवेनाहं वः समीपं केनापि गूढेन कार्येण[3] प्रेषितोऽस्मि । तेन
इतो भूत्वा प्रसद्याऽवधार्यताम् । इत्युक्तः स किञ्चिद् गत्वा पराङ्मुखो
भूत्वा यावद् वार्तां श्रोतुं यतते तावन्मन्त्रिभृत्येन सिंहस्य करः स्वकरे
धृतः सहसा क्षुरिकया छिन्नश्च । छिन्नं स करं गृहीत्वा रे वस्तुपालस्य
भृत्योऽस्मि, पुनः श्वेताम्बरं परिभवेरिति वदंश्चरणबलेन पलाय्य २५

[1] शार्दूल० । [2] घ-'सिंहं राज०' । [3] ग-'गूढकार्येण' । [4] घ-'परं गमुत्वा' ।
[5] ग 'गत्वा वहूढं ददृश्यौ' ।

